# द्वितीयोऽङ्कः

( ततः प्रविशति लावण्यसिंहः )

लावण्यसिंहः—( सर्वतो निरूप्य ) अये ! सायम्प्राय इव दिवसः ।
तथाहि—

आगत्य प्रत्यगुर्वीधरशिरसि चिरश्रान्तिजश्रान्तिजिह्मो
विश्रान्तस्तापमौज्झज्झरिजलकणिकासेवनेनेव साक्षात् ।
अप्यात्मीयानि पश्यन्निव दिवसपतिर्वञ्चितानि प्रतीची-
सिन्धोर्वीचीषु शोणः प्रतितपनचमूकोपरोपादिवाभूत् ॥ १ ॥

( विचिन्त्य च ) अहो ! महान्तोऽपि विवशा एव दिवसात्ययेन ।

यतः, अत्यद्भुतैरभिसृताजनभोगभाग्यैः
सैष प्रणुन्न इव सम्प्रति चण्डरोचिः ।
अब्धौ पतत्यपरशैलशिखाग्रभाग-
विक्रीडदुन्मुखकरप्रकरावलम्बः ॥ २ ॥

( ऊर्ध्वमवलोक्य )

शङ्केऽभ्यर्णस्थपङ्केरुहगहनपरिम्लानिदानोग्रताप-
श्चित्ते चक्राङ्गनानामिह विरहदवोदर्चिरुच्चैःप्रदीप्तः ।
उद्भ्रान्तध्वान्तधूमावलिरुडुवलयव्याजपिङ्गस्फुलिङ्गः
सन्ध्यादम्भेन यस्मान्नभसि सरभसः कोऽपि कीलाकलापः ॥ ३ ॥

( ध्वान्ताधिक्यं विभाव्य )

व्योम व्याप्तं दृगन्धीकृतदुरितभरैरित्वरीलोकलीला-
कान्तारैरब्धिमग्नद्युमणिकरगणालातनिर्माणधूमैः ।
विप्रालीगीतसामप्रभवकरिकुलैः सञ्चरत्कामसेना-
रेणुव्यूहैर्वियोगिव्ययविकृपनिशादुर्यशोभिस्तमोभिः ॥ ४ ॥

( विमृश्य सविषादम् ) अहह ! निरस्तशूरमहसि मलिनसमये कियदुल्लसन्ति क्षुद्रतेजसः । तथाहि सम्प्रति,

उच्चैःकृतप्रतिष्ठानि प्रक्रीडन्तो महीतले ।
तारकाणि हसन्तीव प्रनृत्यन्तीव दीपकाः ॥ ५ ॥

ताश्चेदानीम्, प्रसृमरतिमिरालीकालसर्पेण दष्टा
इव दिवसविधातुः कान्तयः कान्दिशीकाः ।
अचलनिचयचूलाचक्रमाक्रम्य सम्यक्
सपदि पदमकुर्वन्नौषधीषु प्रदोषे ॥ ६ ॥

( निरूप्य च ) अहो ! निरतिशयता तिमिरनिकुरम्बस्य ।
अङ्घ्रिस्पर्शमिता मही ननु तनूमात्रावकाशं विय-
द्दृष्टिर्बुद्धिगतैव वस्तु मृगयत्यक्षान्तरैर्लक्षितम् ।
ध्वान्तैकार्णवतां गते त्रिभुवने तेजोऽभिधानं महा-
भूतं यद्यधुनाऽस्ति वीरधवले वीरालिमालामणौ ॥ ७ ॥

( विमृश्य विहस्य च ) अहो ! सुगृहीतनामधेयानां मतिभिरतिशयेन दीप्यते सहजदीप्तोऽपि प्रभुप्रतापः । तथाहि स्वदेशसदेशमभिसरत्सु स्वेच्छया म्लेच्छराजसैन्येषु तातकारितया प्रयाणकस्य भृशमदीर्घकारितया तया निरतिशयामाशामाशङ्कां च प्रपञ्चयन्तः स्वयममिलन्नमी मरुदेशनरेशाः श्रीवीरधवलस्य । तदिदानीम्,

श्रीसोमसिंहोदयसिंहधारावर्षैरमीभिर्मरुदेशनाथैः ।
दिशोऽष्ट जेतुं स्फुटमष्टबाहुस्त्रिभिः समेतैरभवत्प्रभुर्नः ॥ ८ ॥

अपि च । आराध्यबुद्धिसुधासेकसोद्रेकस्य मदनदेवीनन्दनप्रेमपादपस्य परिपाकपेशलं फलं कलयितुमिव त्वरिततरमाजगाम सङ्ग्रामभासुरः सुराष्ट्रासीमन्तमणिः श्रीभीमसिंहः । ( सविमर्शम् ) अहो ! ज्येष्ठतातमतिकल्पलतिका सम्प्रति फलति स्म ।

यत्तदा मदान्धसिन्धुरदुर्द्धरयदुधराधवरुद्धैरस्माभिर्विघट्य संहतावेव स्फुरन्तौ चित्रकाव्यशब्दार्थाविव दुर्भेदौ महीतटमहीपतिलाटदेशदेशाधिपती विक्रमादित्यसहजपालाभिधौ भेदयित्वा पृथक्क्रियेताम् । तदिदानीमन्योन्यमनन्यमन्युमहोत्साहावहस्पूर्विकया स्वयं समाजग्मतुरस्मदधिपहृदयावर्जनाय ।

अन्यच्च–उत्तुङ्गानां भूभृतां सत्यमेषां विस्तीर्णाभिर्वाहिनीभिर्मिलित्वा ।
कोटीसङ्ख्याः सर्वतः क्षुद्रभूभृद्वाहिन्योऽपि प्रापुरस्मद्बलाब्धिम् ॥९॥

( विचिन्त्य ) कथमद्यापि दक्षिणावनिपालमालवनरेशयोर्यात्रानियन्त्रणाप्रपञ्चाय प्रचारितौ निपुणकसुवेगाभिधानौ चिरयतश्चरप्रधानौ ।

( ततः प्रविशति निपुणकः )

निपुणकः—

[1]जो वत्थुवालस्स मई कमेइ तिलोययं एगवएण सिग्घं।
तं चिंतयंतस्स सया वि मज्झ कुदो सुदूरागमणे वि खेओ ॥ १० ॥

( पुरोऽवलोक्य ) [2]अये तिमिरचक्कवालपंकमज्झंमि परायपुंजपिंजरियं महुयरमिहुणसोहियं पंकेरुहव्व किमिदं दीसदि ? । ( उपलक्ष्य सप्रमोदम् )

[3]मणिघडघडियकिरीडप्पहापहावेण पयडियं पुरओ।
दीसइ वियसियनयणं वयणं सिरिलूणसीहस्स ॥ ११ ॥

( किञ्चिदुपसृत्य ) [4]देव अणुवमाउयरकमलमराल ! पणमामि ।

लावण्यसिंहः—( तदाकर्ण्य स्वगतम् ) अये ! विनयवैदग्ध्यमधुरोऽयं स्वरो निभृतरिपुचरितनिवेदननिपुणं निपुणकमावेदयति । ( प्रकाशम् ) अये निपुणक ! कुशलं भवतः ।

निपुणकः—

[5]देव ! तुह मुहचंददंसणेण, रिपुरायसुहडघडविहडणावणेण य ।

लावण्यसिंहः—( सहर्षम् ) कथमिव विघटितं रिपुसुभटपटलमिति श्रुतिवाञ्छा समुत्सुकयति श्रुतियुगलम् ।

निपुणकः—[6]तया तुम्ह वयणंदुवयणचंदियाचओरीभविय गओहं सिंघणदेवखंधावारं । इत्थंतरे तेणावि पुव्वसंकेदिदेण मह लहुसहोयरेण कुसलयाभिहेण मालवनरिंदस्स चिरयालवल्लहहयवालीभूएण मालवरज्जलच्छीजीवियं व सयलसाहणसेहरो हरी अवहरिऊण देवपालनरिंदनामंकिओ ढुक्किओ दाहिणधरणिसुणासीरसिन्नासीरवीरस्स संगामसीहस्स ।

---

१ या वस्तुपालस्य मतिः क्रामति त्रिलोकमेकपदेन शीघ्रम् ।
तां चिन्तयतः सदाऽपि मे कुतः सुदूरागमनेऽपि खेदः ॥

२ तिमिरचक्रवालपङ्कमध्ये परागपुञ्जपिञ्जरितमधुकरमिथुनशोभितं पङ्केरुहमिव किमिदं दृश्यते।

३ मणिघटाघटितकिरीटप्रभाप्रभावेण प्रकटितं पुरतः ।
दृश्यते विकसितनयनं वदनं श्रीलावण्यसिंहस्य ॥

४ देव अनुपमोदरकमलमराल ! प्रणमामि । ५ देव ! तव मुखचन्द्रदर्शनेन रिपुराजसुभटघटाविघटनेन च । ६ तदा युष्मद्वदनेन्दुवचनचन्द्रिकाचकोरीभूय गतोऽहं सिंहनदेवस्कन्धावारम्। अत्रान्तरे तेनापि पूर्वसङ्केतितेन मम लघुसहोदरेण कुशलकाभिधेन मालवनरेन्द्रस्य चिरकालवल्लभहयपालीभूतेन मालवराज्यलक्ष्मीजीवितमिव सकलसाधनशेखरो हरिः अपहृत्य देवपालनरेन्द्रनामाङ्कितो ढौकितो दक्षिणधरणीसुनासीरसैन्यनासीरवीरस्य सङ्ग्रामसिंहस्य ।

लावण्यसिंहः—( साक्षेपम् ) ततस्ततः ।

निपुणकः—तओ वि य अमुणा अस्सहारिणा सुपयट्टियवयणो एसो त्ति मज्झ समप्पियं तुरयरयणमिमं । इय चिंतिऊण संगामसीहेणावि पसाइऊण य पासंमि रक्खाविओ एसो ।

लावण्यसिंहः—( स्वगतम् ) अहो ! रहोविचाररुचिरोऽयं प्रपश्चश्चरचक्रस्य । ( प्रकाशम् ) ततस्ततः ।

निपुणकः—तओ[2] अहं वि य तत्थ सुचरिओ नाम चरो गुज्जरचरियाणि चरिउं पुव्विं पेसिदो आगदुत्ति संधिविग्गहवावारिणा रायस्स सयासं नीदो । तओ तस्स सुहोदक्कं च विन्नवियं मए । जं देव ! जज्जरिओ गुज्जरधराए परिसरंतो पसरंतेहिं हम्मीरखंधारेहिं । तं सुणिऊण समुच्छरिओ समत्थपच्चत्थिसत्थेहिं विग्गहुत्तिकयत्थुव्व उद्धसिअंगो धसिओ गुज्जरधरुद्धरणधवलो सिरिवीरधवलो गरुयगरुएहिं पयाणेहिं । संपत्तो वि य नियधरित्तीसीमंते सीमंतिए रिउरायराईहिं ।

लावण्यसिंहः—( सप्रमोदम् ) साधु निपुणक ! साधु । त्वद्वचनमिदं हृदयगोचरीभूतं काममवस्थामनयत्तमवनीधवम् ।

निपुणकः—तओ[3] एरिसपोरिसुक्करिसकहाचमक्कारायंकपुलकियकंपियसरीरेण कहं चलियनियसिन्नमत्तओ पत्तो सत्तुसंमुहो एसुत्ति पुच्छियम्हि तेण महामहिंदेण ।

लावण्यसिंहः—ततस्ततः ।

---

१ ततोऽपि च अमुना अश्वहारिणा सुप्रवर्त्तितवदन एष इति मम समर्पितं तुरगरत्नमिदम् । इति चिन्तयित्वा सङ्ग्रामसिंहेनापि प्रसाद्य च पार्श्वे रक्षापित एषः । २ ततोऽहमपि च तत्र सुचरितो नाम चरः गूर्जरचरित्राणि चरितुं पूर्वं प्रेषितः आगत इति सन्धिविग्रहव्यापारिणा राज्ञः सकाशं नीतः । ततस्तस्य शुभोदर्कं च विज्ञप्तं मया । यद्देव जर्जरितो गूर्जरधरायां परिसरन् प्रसरद्भिः हम्मीरस्कन्धावारैः । तच्छ्रुत्वा समुच्छलितः समर्थप्रत्यर्थिसार्थैः विग्रहोक्तिकृतार्थ इव उद्धसिताङ्गो धावितः गूर्जरधरोद्धरणधवलः श्रीवीरधवलो गुरुकगुरुकैः प्रयाणैः । सम्प्राप्तोऽपि च निजधरित्रीसीमंते सीमन्तिते रिपुराजराजिभिः । ३ तत एतादृशपौरुषोत्कर्षकथाचमत्कारातङ्कपुलकितकम्पितशरीरेण कथं चलितनिजसैन्यमात्रकः प्राप्तः शत्रुसम्मुख एव इति पृष्टोऽस्मि तेन महामहीन्द्रेण ।

निपुणकः—मेए भणियं ।

जोण्हाकणुव्व तिमिराण मुहे रिऊणं
पुव्वं पि वीरधवलो मिलिओ झडत्ति ।
पच्छा पयासि कुमुयं उइयं कमेण
तं रायमंडलमसेसकलाणिवेसं ॥१२॥

तओ सव्वो वि महसिन्नमुहमारुदेणावि तिणुव्व पलायदि रायवंसो । एसो उण अम्हाण भुयजुयलाभोयभायधेएण रणत्थं फुडं फोरविउत्ति विहसिओ सो वि हम्मीरो तुरयवई । तओ संपइ तत्थ सत्तट्ठदिणमज्झंमि जुज्झं संभावीयदित्ति मह वयणं सवणभूसणीकरिऊण हरिसिएण भणियं तेण भूवइणा जं इयाणिं महाविग्गहनिग्गहविग्घिएसु तेसु खत्तिएसु सुहसाहियं गुज्जररज्जसिरिकरग्गहणं, तो अम्हाणं न जुज्जए पयाणकालक्खेवो ।

लावण्यसिंहः—( साशङ्कम् ) ततस्ततः ।

निपुणकः—तओ हसिऊण जंपियं मए । जं नाह सुरगुरुमईणं तुम्हाणं पुरओ केरिसी अम्हाणं सेमुही । तहा वि य जारिसं तारिसं चिय ससंभमुव्व मह भासियं संभावेसि त्ति तुह पसाएण तुराविदो किंपि जंपिस्सं । अहुणा अओ ठाणाओ न उचियं ज्जेव पयाणयं, कीणासकिंकरकोडिकडुयसुहडपरिवाडिपयडियफुडफालकरालविक्कमाणं ताणं रणरहस्सं जाव, जहा जियजुज्झो वि जमकवलियपयंडवहुसुहडलहुयविहुरपरियरो सुहेण गहणीओ होइ गुज्जरराओ । इत्थ पराजिएऊण तारिसनिक्करुणसुक्कतुरक्कसंहरणजणिया जयलच्छी

१ मया भणितम् । ज्योत्स्नाकण इव तिमिराणां मुखे रिपूणां पूर्वमपि वीरधवलो मिलितो झटिति । पश्चात्प्रकाशि कुमुदमुदितं क्रमेण तद्राजमण्डलमशेषकलानिवेशम् ॥

ततः सर्वोऽपि महासैन्यमुखमारुतेनापि जरत्तृणमिव पलायते राजवंशः । एष पुनः अस्माकं भुजयुगलाभोगभागधेयेन रणार्थं स्फुटं स्फोरित इति विहसितः सोऽपि हम्मीरस्तुरगपतिः । ततः सम्प्रति तत्र सप्ताष्टदिनमध्ये युद्धं सम्भाव्यत इति मम वचनं श्रवणभूषणीकृत्य हर्षितेन भणितं तेन भूपतिना यदिदानीं महाविग्रहनिग्रहविघ्नितेषु तेषु क्षत्रियेषु सुखसाधितं गूर्जरराज्यश्रीकरग्रहणं, ततोऽस्माकं न युज्यते प्रयाणकालक्षेपः ॥ २ ततो हसित्वा जल्पितं मया यन्नाथ सुरगुरुमतीनां युष्माकं पुरतः कीदृशी अस्माकं शेमुषी । तथाऽपि च यादृशं तादृशमेव ससम्भ्रममिव मम भाषितं सम्भावयिष्यसीति तव प्रसादेन त्वरितः किमपि जल्पिष्ये । अधुना अतः स्थानात् न उचितमेव प्रयाणकं, कीनाशकिङ्करकोटिकटुकसुभटपरिपाटिप्रकटितस्फुटफालकरालविक्रमाणां तेषां रणरहस्यं यावत्, यथा जितयुद्धोऽपि यमकवलितप्रचण्डवहुसुभटलघुकविधुरपरिकरः सुखेन ग्रहणीयो भवति गूर्जरराजा । अत्र पराजित्य

अप्पाणं गुज्जरमहीगहणकित्तीए कन्नकुंडलीहोइ । अन्नहा अहुणा गहियविग्गहेसु तुम्हेसु जइ वेरिवीरेहिं कयसंधाणो ताणं परिग्गहं गहिऊण अप्पाणं संमुहो परागच्छदि, ता केण साहिउं सक्कीयदि मंतसत्तिसमुच्छुंगियपहुच्छाहसत्ती सिरिलूणप्पसायअंगुब्भमिओ । ता इहज्जेव गुज्जरमालवएसप्पवेसमग्गजुयलमुहसन्निवेसम्मि ठाऊण तावीतीरवणगहणविहारकोदूहलेण कीरइ तज्जुज्झपवट्टिं जाव समयविलंबो ।

लावण्यसिंहः—( सौत्सुक्यम् ) ततस्ततः ।

निपुणकः—[1]तओ एवंविहमंतवियारहरिसियहियओ तट्ठाणपरिहावियकडयुक्केरो न हु पणिहिमन्तपओयजुग्गोसित्ति भणिऊण पहाणपुरिसगारवेण मं समंज्जेव गहिऊण विहरिओ तवणतणयातडिणीतीरतरुसंडेसु दाहिणभूमंडलाहंडलो ।

लावण्यसिंहः—( सप्रमोदम् ) निसृष्टार्थशिरोमणे ! भवादृशैरेवावनीपालसचिवरोपिताः सफलतां नीयन्ते मतिप्रतानिन्यः ।

तथाहि—मतिप्रकाशे जातेऽपि कृतमोहतमोहतौ ।
अमात्याः क्व प्रगल्भेरन्नस्फुरच्चारचक्षुषः ॥ १३ ॥

ततस्ततः ।

निपुणकः—( संस्कृतमाश्रित्य ) ततश्च मन्मतिप्रचयनिश्चितविजयजातसन्तोषपोषश्चिरं चिक्रीड तापीतीरकान्तारतरुलतानिकुञ्जेषु ।

तथाहि—क्वचिद्दोलाकेलिं क्वचिदपि च पुष्पावचयनं
क्वचित्स्वैरालापं क्वचिदपि च तूर्यत्रिकरसान् ।

---

तादृशनिष्करुणरणशुष्कतुरुष्कसंहरणजनिता जयलक्ष्मीरात्मना गूर्जरमहीग्रहणकीर्त्याः कर्णकुण्डली भवति । अन्यथा अधुना गृहीतविग्रहेषु युष्मत्सु यदि वैरिवीरैः कृतसन्धानः तेषां परिग्रहं गृहीत्वा आत्मनां सम्मुखः परागच्छति । तत् केन साधयितुं शक्यते मंत्रशक्तिसमुच्छृङ्गितप्रभूत्साहशक्तिः श्रीलवणप्रसादाङ्गोद्भवः । तदिहैव गूर्जरमालवदेशप्रवेशमार्गयुगमुखसंनिवेशे स्थित्वा तापीतीरवनगहनविहारकौतुहलेन क्रियतां तद्युद्धप्रवृत्तिः यावत् समयविलम्बः ॥

१ ततः एवंविधमन्त्रविचारहर्षितहृदयः तत्स्थानपरिधापितकटकोत्करः न खलु प्रणिधिमन्त्रप्रयोगयोग्योऽसि इति भणित्वा प्रधानपुरुषगौरवेण मां सममेव गृहीत्वा विहृतः तपनतनयातटिनीतीरतरुखण्डेषु दक्षिणभूमण्डलाखण्डलः ।

सिषेवे देवोऽसौ प्रणयलयलीलामयमनो-
गलच्चैतन्याभिः सह सहचरीभिः प्रतिलवम् ॥ १४ ॥

तदनु च—

अनुकृतकरलीलालोलकल्लोलतापी-
नलिनवदनतादृक्चुम्बनक्रीडयेव ।
मृदुतरगतिरागात्सम्मुखीनः समीरो
भृशमवनिविनेतुस्तीरमभ्यागतस्य ॥ १५ ॥

लावण्यसिंहः—तावदमन्दानन्दरसार्णवमग्न एवायमभवदवनिधवः । ततस्ततः ।

निपुणकः—तेओ तत्थ तावीतरंगसुअपरिसंगरंगेहिं कलियजलसी-अरनिउरंबं सत्तियसेअंबुचुंबिउव्व समीरणं सेवमाणस्स तस्स कुसुमिय-तीरतरुमूलसुहनिविट्ठस्स नरिंदस्स सुवेगो कलियतवोहणवेसो तडिणीतडपय-डियमज्झण्हसंझज्झाणो नयणगोयरं गदो । अवारसंसारसायरपरिसोसणप्प-लयकालाणललद्धतवतेअनिही मह पुन्नायड्ढिओ सयंज्जेव महेसरुव्व महीवीढं अवयरिओ एसो । एयं भासिऊण तप्पयपणामसमूसुअहिअओ तुरिय-तुरिएहिं चलणक्खेवेहिं चलियो राआ ।

लावण्यसिंहः—( सोपहासम् ) अहो ! मोहस्तस्य महीशस्य । ततस्ततः ।

निपुणकः—संमुहं चेव पयाइलोअपरिवारियं पहुवीपइं परावडिदं पि-क्खिऊण पलाइदो एसो तावसो ।

लावण्यसिंहः—( सहासम् ) ततस्ततः ।

निपुणकः—तओ—

को वि कस्स वि गूढपुरिसो एसो गिन्नह गिन्नहित्ति नरिंदपेसिअतुरिय-भडेहिं गहिओ मह जीवियं रक्खध रक्खध ।

---

१ ततः तत्र तापीतरङ्गसुजपरिसङ्गरङ्गैः कलितजलशीकरनिकुरम्बं सात्विकसेकाम्बुचुम्बित-मिव समीरणं सेवमानस्य तस्य कुसुमिततीरतरुमूलसुखनिविष्टस्य नरेन्द्रस्य सुवेगः, कलिततपोधनवेषः तटिनीतटप्रकटितमध्याह्नसन्ध्याध्यानः नयनगोचरं गतः। अपारसंसारसागरपरिशोषणप्रलयकालानल-लब्धतपस्तेजोनिधिः मम पुण्याकृष्टः स्वयमेव महेश्वर इव महीपीठमवतरित एषः । एवं भाषित्वा तत्पदप्रणामसमुत्सुकहृदयः त्वरितत्वरितैः चलनक्षेपैः चलितो राजा ॥ २ सम्मुखमेव पदातिलोकप-रिवारितं पृथ्वीपतिं परापतितं प्रेक्ष्य पलायित एष तापसः। ३ ततः—कोऽपि कस्यापि गूढपुरुष

एरिसं पुणो पुणो वि जंपंतो बलाइड्डियबाहू विसमविसमकयपय-संचारो अनिच्छंतुव्व आणिओ नरिंदस्स पुरओ। तओ अहं न कस्स वि गूढपु-रिसो नत्थि किंपि मह जडाजूडमज्झम्मि कीरिसो वि लेहो ता कहं अहं धरि-ओत्ति विहुरं विलवंतस्स कंपियसयलसरीरस्स तस्स जडामंडलमूलम्मि मए विणिहियहत्थेण मंडलेसरसंगामसीहस्स एयंनामंकिओ पाविओ लेहो। तओ मह हत्थाओ गहिऊण राया उग्गंठिऊण जाव पलोवइ ताव तत्थ न हु लिविलवो वि चिट्ठइ। पच्छा किमेयं ति रायपुच्छिएण मए खणमित्तं चिंतिऊ-ण निवेइयं जं कस्स वि लेहवडसवन्नस्स लेवस्स लिवी संभावीयदि, ता खणं तरणितावे दाऊण एयस्स ज्ञेव कवडतावसस्स तुंबीहलाहारच्छारेण विच्छड्डिया फुडीभविस्सइ। तओ एवं काऊण महाराएण वाचिऊण लेहो मह्ज्जेव समप्पिओ। एसो सो।

(इति ग्रन्थितः समाकृष्य लेखं समर्पयति।)

**लावण्यसिंहः**—(गृहीत्वा वाचयति) स्वस्ति श्रीमहाराजदेवपालदेवः सङ्ग्रामसिंहमण्डलेश्वरं समादिशति। अस्माभिर्निजविजयश्रीवशीकरणकारणं त्वत्कृते प्रहितमिदमश्वरत्नम्। त्वया तु सततमत्रैव कटके स्थातव्यम्। यदा गूर्जरावनिं प्रविशतोऽस्य नृपस्य वयमाकस्मिकागमनेन समरसंरम्भं सम्भा-वयामः, तदा निजपितृवधभववैरार्णवोत्तरणाय तरीकरणीयः करवाल इति। (लेखार्थमवधार्य चरं प्रति) तदित्यवगत्य किं प्रतिपन्नमनेन मानिना मेदिनीजानिना।

**निपुणकः**—[1]तओ अहंज्जेव तुरयदंसणम्मि पेसिओ पहुवीपहुणा। तओ तत्थगयेण मए एसो गुज्जरमहीहंडमंडलाहिवई मा विसुत्तीअदुत्ति नि-यलहुसहोयरकुसलयमुहेण तुम्हाणं कुविओ रायत्ति संगामसीहस्स कहा-

---

एष गृहीत गृहीत। नरेन्द्रप्रेषितत्वरितभटैः गृहीतो मम जीवितं रक्षत रक्षत॥ एतादृशं पुनः पुनरपि जल्पन् बलाकृष्टबाहुः विषमविषमकृतपदसञ्चारः अनिच्छन्निव आनीतः नरेन्द्रस्य पुरतः। ततोऽहं न कस्यापि गूढपुरुषः, नास्ति किमपि मम जटाजूटमध्ये कीदृशोऽपि लेखः, तत्कथमहं धृत इति विधुरं विलपतः कम्पितसकलशरीरस्य तस्य जटामण्डलमूले मया विनिहितहस्तेन मण्डलेश्वरसङ्ग्रा-मसिंहस्य एतन्नामाङ्कितः प्राप्तो लेखः। ततो मम हस्तात् गृहीत्वा राजा उद्ग्रथ्य यावत्प्रलोकयति तावत् तत्र न खलु लिपिलवोऽपि तिष्ठति। अत्र किमेतदिति राजपृष्टेन मया क्षणमात्रं चिन्तयित्वा निवेदितं, यत्कस्यापि लेखपटसवर्णस्य लेपस्य लिपिः सम्भाव्यते, तत्क्षणं तरणितापे दत्त्वा एतस्यैव कपटतापसस्य तुम्बीफलाधारक्षारेण विच्छादिता स्फुटीभविष्यति। तत एवं कृत्वा महाराजेन वाचयित्वा लेखो ममैव समर्पितः। एष सः॥ १ ततः अहमेव तुरगदर्शने प्रेषितः पृथ्वीप्रभुणा। ततः तत्रगतेन मया एष गूर्जरमहीखण्डमण्डलाधिपतिः मा विश्वस्यतामिति निजलघुसहोदरकुशलकमुखेन

विदं। अत्थि रविरहवाहाणं अट्ठमो विय मालवियरायनामंकिओ तुरिओ त्ति विन्नवियं सीहणदेवस्स। इत्थंतरे भूवइभएण पलाइदो संगामसिंहो। तओ कवडेण वि अंगीकयगंगाहरवेसो एसो न मारिउं जुज्जइ त्ति मए सुवेओ मिल्लाविओ।

लावण्यसिंहः—साधु निपुणक साधु! साधु प्रज्ञानिधे साधु!। कस्त्वदन्योऽस्मत्प्रतिमियन्तं महिमानमानेतुमीष्टे। ततस्ततः।

निपुणकः—तओ अइकोवानलपज्जलिओ चलिओ मालवम्मि मेइणीनाहो। सिरिदेववालदेवो वि तस्स सम्मुहंज्जेव परावडिदो। एवं तत्थ परप्परगरुयविग्गहगहियगव्वम्मि रिउजुयले एरिसकहाकहणत्थं सिरिवत्थुवालपासम्मि सुवेअं पेसिऊण अहं पि तुम्हाणं समीवं समागओ।

लावण्यसिंहः—अहो महनीयः कश्चिदेव सामग्रीविशेषः।

तथाहि—त्रैलोक्यातिगमेव वीरधवलक्षोणीपतेः पौरुषं
पूज्यानामपि शेमुषी सुरगुरुप्रागल्भ्यदीक्षागुरुः।
एतेऽपि प्रतिपक्षपार्थिवबलस्तम्भैकमन्त्राक्षराः
माहात्म्यं बत मादृशोऽपि लभते यन्मध्यमध्यासितः ॥१६॥

तदिदानीमिदमशेषमपि चरितं निवेदयामो जगदेकवीरस्य श्रीवीरधवलदेवस्य।

( इति निष्क्रान्तौ )

विष्कम्भकः

( ततः प्रविशति वस्तुपालः )

वस्तुपालः—( पुरोऽवलोक्य ) अये हिमकरकिरणाङ्कुरसीमन्तिततिमिरचिकुरनिकुरम्बा न करम्बयति प्रमोदेन कस्य हृदयानि दिगसौ वासवाधिवासिता।

---

युष्माकं कुपितो राजेति सङ्ग्रामसिंहस्य कथापयितम्। अस्ति रविरथवाहानामष्टम इव मालवीयराजनामाङ्कितो तुरग इति विज्ञप्तं सिंहनदेवस्य। अत्रान्तरे भूपतिभयेन पलायितः सङ्ग्रामसिंहः। ततः कपटेनापि अङ्गीकृतगङ्गाधरवेष एष न मारयितुं युज्यत इति मया सुवेगो मोचितः। १ ततः अतिकोपानलप्रज्वलितश्चलितो मालवेषु मेदिनीनाथः। देवपालदेवोऽपि तस्य सम्मुखमेव परापतितः। एवं तत्र परस्परगुरुकविग्रहगृहीतगर्वे रिपुयुगले एतादृशकथाकथनार्थं श्रीवस्तुपालपार्श्वे सुवेगं प्रेष्य अहमपि युष्माकं समीपं समागतः॥

सम्प्रति हि, वल्गन्ती नभसि हिमांशुधामलेखा-
व्याजेन प्रथमसमुदित्वरी पताका ।
कामोर्वीकमितुरनीकिनीमनीचै-
रायान्तीं कथयति जेष्यतो जगन्ति ॥ १७ ॥

( विभाव्य च ) अयमुदयमहीभृद्वंशसङ्घट्टजन्मा
दव इव जयतीन्दोः पिञ्जरः कान्तिपुञ्जः ।
इति हृदयनिकेतं लग्नकामस्फुलिङ्ग-
ज्वलितमिव वधूनां मङ्क्षु मानो मुमोच ॥ १८ ॥

अहह ! सहस्रद्युतिपतनमहाप्रहारोच्छलितजलधिलहरिदूरप्रणुन्नमिव चिरादचुम्बदम्बरमिदमिन्दुबिम्बम् । ( विमृश्य च ) अहो महत्त्वसुहृदोरम्बराम्बुनाथयोरुपकृतिप्रत्युपकृतिचरितरुचिरः कश्चित्प्रमोदप्रपञ्चः । तथाहि—

यददित निजरत्नं भास्करं व्योमदेश-
स्तदुरुलहरिलासैरम्बुराशिर्ननर्त्त ।
यदयमपि हिमांशुं प्रत्यदादात्मरत्नं
सपदि तदमुनाऽपि ज्योत्स्नया हस्यते स्म ॥ १९ ॥

तान्यपि,

नीलानि षट्पदकुलानि हसन्मुखीनां
लीनानि भान्ति हृदयेषु कुमुद्वतीनाम् ।
दूराभ्युपेतनिजकान्तकरान्तसङ्ग-
पीयूषशान्तविरहानलसन्निभानि ॥ २० ॥

हन्त अशक्यावलोकनः सुजनस्य व्यसनयोग इव रिपोरभ्युदयाभोगः । यदसौ,

उन्मीलद्विप्रलम्भव्यतिकरविधुरं मण्डलं चक्रनाम्नां
धाम्नां वृन्दैरपीन्दुं सुरभितककुभं द्रष्टुमप्यक्षमेव ।
निर्यद्भृङ्गीभुजङ्गच्छलबहुलगलत्कज्जलाविलबाष्पं
साक्षादम्भोजदम्भादहह कमलिनी मीलयामास नेत्रम् ॥२१॥

( गगनाङ्गणमवलोक्य ) सोऽयं मन्दं मन्दमुदञ्चति देवः ।

भृङ्गीसङ्गि वियत्तडागकुमुदं कस्तूरिकार्द्रं निशा-
स्त्रीवक्त्रं सितिधामचामरधरः कन्दर्पवीरः स्फुरः ।
रक्षाभोगिविभूषितं भुवनहृत्पीयूषकुण्डं वपु-
र्नैर्मल्यस्फुटदृश्यपीततिमिरप्रख्याङ्कपङ्को विधुः ॥ २२ ॥

अपि चेदानीम्,

प्रगुणितमिव मन्मथेन दृष्ट्वा
विषधरदिग्धघटोपमं मृगाङ्कम् ।
किल सपदि मदः पलायितः प्रा-
गपहृतदम्पतिकामकेलिचित्तः ॥ २३ ॥

( चन्द्रिकातिशयं विभाव्य ) नूनमिदानीम्,

भृङ्गा भृङ्गकुलेषु पुष्पितलतालीनेषु पुष्पभ्रमा-
ल्लीयन्तेऽभ्रमुवल्लभभ्रमभृतोऽन्योन्यं नमन्ति द्विपाः ।
ते भोगीन्द्रधिया च भर्गभुजगा भक्तिं भजन्ते मिथः
पीयूषत्विषि कौमुदीसमुदयाद्वैतं समातन्वति ॥ २४ ॥

( सहर्षोल्लासं च ) अहो ! नहि कदाचिदपि स्वजनैर्भुज्यमाना विलीयन्ते विभूतयः । तथाहि—

आक्रान्तापि जगद्विलोचनपरीणाहैश्चकोरीकुलै-
रापीतापि निरन्तरं कुमुदिनीवृन्दैरपि स्वीकृता ।
व्यक्तं शुक्तिकुटुम्बकैः कवलिताप्याकाशकोशालय-
क्रोडान्तः प्रतिवर्द्धते प्रतिलवं सान्द्रैव चान्द्री रुचिः ॥ २५ ॥

( इन्दोर्वैशद्यातिशयमुद्भाव्य )

बद्धस्पर्द्धो वदनसदनैर्लोचनैरङ्गनाना-
मङ्गीचक्रे तुहिनकिरणोत्सङ्गसङ्गं कुरङ्गः ।
दर्शंदर्शं बत जितमिवात्मानमत्राप्यमीभिः
शङ्के सङ्कोचयति निचितव्रीडपीडः क्रमेण ॥ २६ ॥

अपि च । ध्रुवमविरलतारासीकरोत्क्षेपहारि
व्यधित गगनगङ्गावारिणि स्नानमिन्दुः ।
प्रथमजलधिमध्योत्थाननीरप्रचार-
प्रचितमिव यदङ्गादङ्कपङ्कं मुमोच ॥ २७ ॥

( तारकतुच्छतां च सञ्चिन्त्य )

कनीयस्यो दृश्या न खलु दिवि तारा यदिह त-
न्नपावेशान्नेशुः क्रमितरि विधौ विस्तृतकरे ।
वनक्ष्माखण्डेषु क्षितिरुहलतामण्डलदला-
न्तरस्फूर्जज्ज्योत्स्नाकणतिलकसन्दोहमिषतः ॥ २८ ॥

अहह! महद्भयोऽपि महान्तो महनीयतामावहन्ति । यतः—

बद्धस्पर्द्धाविरोधात्कवचयतु पयः सिन्धुवीचीमरीची-
नुच्चैः सन्नह्यतां वा कुमुदसमुदयोदञ्चदंशुप्रपञ्चैः ।
चन्द्राश्मद्रावकुल्यामयरुचिनिचयादस्तु संवर्मितं वा
तच्चान्द्रं धाम सान्द्रं तदपि निभमभून्मत्प्रभोर्नैव कीर्त्तेः ॥२९॥

( विचिन्त्य ) अहो मत्प्रभोर्भाग्योदयः परमां सौभाग्यभङ्गीमङ्गीकरोति । येन हि,

स्फारच्चारनयैर्निरीक्षिता वैरिवीरपृतनाः समन्ततः ।
स्तम्भभावमसिदम्भवेणवः कुम्भिकुम्भकुचसम्भृता दधुः ॥३०॥

( सविमर्शं च ) सुवेगवदनारविन्दमकरन्देन विघटितसङ्ग्रामसिंहस्य सिंहनदेवस्योदन्तेन प्रमोदपदवीमारोपिताः स्मः । स खलु तमेतद्देशीयमग्रेसरं विना न विनाशयितुमीष्टे किञ्चिदप्यस्मदीयम् । तीव्रोऽपि हि कुठारो दारुदण्डं विना न दारु दारयितुमुदारतामासादयति ।

( सचमत्कारोत्कर्षम् ) सत्यं वाचामगोचराणि सङ्ग्रामसिंहस्य जगत्पवित्राणि तानि चरित्राणि ।

अन्वर्कं द्युतिशालिनोऽनु शशिनं सौम्यस्पृशोऽन्वर्जुनं
योद्धारोऽनु बलिं च दानचतुरा जातेति नित्या श्रुतिः ।
एकत्रैव तु सिन्धुराजतनये तादृग्यशो जल्पतां
चेद्भिन्नाथ विभाति वीरधवलक्ष्माभृद्गुणानुस्मृतिः ॥ ३१ ॥

( सानुस्मरणं च )

दुस्साधं बत बाहुकोटिभिरपि श्रीसिंहनोर्वीधव-
स्कन्धावारभरं भुजद्वयसखः श्रीसैन्धुराजिर्जयन् ।
रेवाया विलुलोप विस्मयरसं सङ्ग्रामजाग्रद्दश-
ग्रीवाहङ्कृतिहुङ्कृतार्जुनभुजासम्भारसम्भावितम् ॥ ३२ ॥

सोऽपि सम्प्रति ततो विघटितः समागच्छन्निह सन्धानमिच्छुर्निजप्रधानपुरुषं भुवनकाभिधानमनुयुज्य सुवचनोपायनादिभिरस्मानावर्जयामास । तदनेन पुराणपुरुषपौरुषेण कृतकां मैत्रीमातन्वता प्रभुपृष्ठिघातरक्षणगुल्मोऽपि मम समर्थः स्यात् । तदयमिदानीं क्व भविष्यतीति कुतः प्रवृत्तिं लप्स्यामहे ।

( ततः प्रविशति पटाक्षेपेण कुशलकः )

कुशलकः—झायंतो पुव्ववेरं तरलियतुरयक्केरपायप्पहार-
प्पब्भारुक्खित्तधूलीवलयकवलियासेससूरप्पहावो ।
तुम्हाणं सेमुहीहिं कडयविहडिओ संपइत्थंभतित्थ-
त्थंभत्थं एइ रोसप्पसरकलुसिओ नाह संगामसीहो ॥३३॥

वस्तुपालः—( पुरोऽवलोक्य ससंरम्भम् )किमात्थ भो कुशलक किमात्थ ?।

कुशलकः झायंतो पुव्ववेरं, इत्यादि पुनः पठति

वस्तुपालः—( सक्रोधम् ) अये प्रहितप्रधानपुरुषप्रपञ्चेन विप्रतार्य चिर-मस्मानाकस्मिकप्रपातेन स्तम्भपुरीं परिभूय पूर्वकलुषितं यशो विशदयितुमिच्छति सैन्धुराजिः । धिगू मौढ्यममुष्य ।

यतः—क्षत्रस्य त्रस्यतो युद्धे दुर्यशोवल्लिरुल्लसेत् ।
सा स्यान्मञ्जरिता योद्धुं छद्मना पुनरेष्यतः ॥ ३४ ॥

( सारम्भं च ) कः कोऽत्र भोः ? ।

( प्रविश्य )

पुरुषः—आणवेदु भट्टा ।

वस्तुपालः—प्रहिणु स्तम्भतीर्थाय वीरवर्गोदग्रां सैन्यसामग्रीमिहाकारय च भुवनकाभिधानं सङ्ग्रामसिंहप्रधानम् ।

पुरुषः—जं आदिसदि देवो । ( इति निष्क्रान्तः )

( ततः प्रविशति भयवेपमानवपुर्भुवनकः )

भुवनकः—( स्वगतम् ) कथमिव प्रकाशतां गतोऽयमर्थः । अथवा अतीन्द्रियज्ञानमयं नयनमिव विप्रकृष्टकालाध्वप्रयोगालोकनेऽपि विभवति गुप्तचरचक्रं सचिवचक्रवर्तिनाम् । ( पुरोऽवलोक्य प्रकाशम् )

अये इहैवास्ति मतिलतालवालः शत्रुकवलनकालः श्रीवस्तुपालः ।

( भयमन्थराणि कतिचित्पदानि दत्त्वा प्रणमति )

वस्तुपालः—( सावहित्थकोपम् ) इहास्यताम् ।

( भुवनक उपविशति )

---

१ ध्यायन् पूर्ववैरं तरलिततुरगसम्बन्धिपादप्रहारप्राग्भारोत्क्षिप्तधूलीवलयकवलिताशेषसूरप्रभावः युष्माकं शेमुषीभिः कटकविघटितः सम्प्रति स्तम्भतीर्थस्तम्भार्थमेति रोषप्रसरकलुषितो नाथ सङ्ग्रामसिंहः ॥ २ आज्ञापयतु भर्त्ता । ३ यदाऽऽदिशति देवः ।

( नेपथ्ये )

भो भो सेनासुभटाः ! द्रुतगतिभिः स्तम्भतीर्थावष्टम्भसंरम्भिणो भवन्तु भवन्तः ।

कृष्णाङ्गी यमुनाऽतिपाण्डुरतनुर्गङ्गेति सद्यो महा-
नद्योरप्युपद्युष्टदूषणपदः साक्षादयं जायताम् ।
क्रुध्यद्वीरविदारितारिपृतनाकीलालकालेयका-
लेपस्मेरमहीसरित्कृतपरीरम्भानुरक्तोऽर्णवः ॥ ३५ ॥

ततश्च समरसमालोकनसमेतदिविषत्परिषदानन्दसन्दर्भाय,

कुर्वद्भिर्गलगर्जितानि मुरजस्वानोद्भटानि स्फुटं
वीरेन्द्रैरपि तारगीतरुचिरं हेषारवं वाजिभिः ।
त्रस्यद्वैरिमहोत्सवैकसुभगे श्रीस्तम्भतीर्थे जवा-
दास्तां ताण्डवडम्बरव्यसनिनी देवी जयश्रीः स्वयम् ॥ ३६ ॥

**वस्तुपालः**—( समाकर्ण्य सहर्षसंरम्भम् ) अये स्तम्भतीर्थं प्रति प्रयाणकाय प्रगुणीभवन्ति सूरपालादयः सेनापतयः । ( भुवनकं प्रति ) तेन भवत्प्रभुणा त्वत्प्रेरणादस्मान्विप्रतारयता कपटावस्कन्दकन्दलितकलङ्काङ्कुरेण सङ्ग्रामसिंह इति निजनामार्थं व्यर्थं समर्थयता सम्प्रति,

शङ्के पङ्कनिधिर्यशोमयपयःसिन्धुः प्रधावन्महा-
वाहव्यूहखुरक्षतक्षितिरजश्चक्रेण चक्रे चिरात् ।
तादृग्दूरतरप्रचाररभसाविर्भूतसेनाभट-
प्रस्वेदाम्बुकदम्बकेन शमितः सोऽपि प्रतापानलः ॥ ३७ ॥

इदानीमपि तत्सैनिकनिकराः,

दूरावस्कन्दयात्रारभसभरसमुद्भूतखेदापनोदं
निर्मातुं स्फारधाराम्भसि मदसिमहासिन्धुपूरे निमज्ज्य ।
ते सद्यः स्वादयन्तस्तुहिनकरकलाचक्रवालोपदंश-
स्वाद्यं स्वर्धामरामाधरमधुरमधु स्वास्थ्यभावं भजन्ताम् ॥ ३८ ॥

( नेपथ्ये हयहेषारवः स्यन्दनचक्रचीत्कारश्च )

**भुवनकः**—(समाकर्ण्य स्वगतम्) कथं चलितमेव सकलमपि बलं स्तम्भतीर्थाय। अहो! त्वरितकारिता सचिवशेखरस्य। तदिदानीमशुभोदर्क इव सहानेन

विग्रहः सङ्ग्रामसिंहस्य । स्फुटमफलितप्रारम्भस्य पुनरमुष्य वलमानस्य नश्यन्ति यशांसि । तदयमुदग्रनिग्रहव्यस्तवीरधवलप्रतिग्रहाय प्रचलितो मत्प्रभुरितीह तु प्रकाश्य तत्राप्येवं गुप्तचरमुखेन निवेदयिष्ये तदेव यशस्करम् ।

( प्रकाशम् )

देव महीबृहस्पते ! कथमिवायमलीकः कथारम्भो भवन्तमपि संरम्भयति।

अङ्गादङ्गारवृष्टिं यदि सृजति जगद्दृक्सुधाबिन्दुरिन्दु-
भास्वान्विश्वप्रदीपो यदि करनिकरैरान्धकारं विकारम् ।
चित्ते काराधिकारीकृतरिपुनृपतिर्नो तथापि प्रताप-
ज्वालाजिह्वालबाहुश्छलकलहधुरां दुर्द्धरः सैन्धुराजिः ॥ ३२ ॥

स तु रणचतुरतुरष्कोद्धुरभुजादण्डकण्डूखण्डनकुतूहलोत्तरलः प्रचलितवान् गूर्ज्जरशिविराय ।

वस्तुपालः—( साभिप्रायस्मितम् ) यद्येतदप्यनलीकमेव तत्प्रियमस्माकम्। यदि वा दिवानिशाध्यातविरोधक्रोधनः कपटप्रधनाय धावति तदतिप्रियमेव प्रमोदयति नः समरनिर्गले भुजार्गले । तद्गच्छ निर्भयमुभयथापि त्वरय त्वमात्मनः स्वामिनम् । ( इति प्रसाददानेन सम्भाव्य तं प्रेषयति )

( भुवनकः सविनयं प्रणम्य निष्क्रान्तः )

वस्तुपालः—(निपुणकं प्रति) तदा क भवानभवदरातिबलपारावारपारीणः।

निपुणकः—[1]महिमहानईलंघणसमुक्कण्ठिए संगामसीहे अहं आगदुम्हि ।

वस्तुपालः—तदहमपि सुभटालिपालितधवलकपुरः सत्वरमेव स्तम्भतीर्थाय गच्छामि ।

( इति निष्क्रान्तः )

द्वितीयोऽङ्कः

१ महीमहानदीलङ्घनसमुत्कण्ठिते सङ्ग्रामसिंहे अहमागतोऽस्मि ।

# तृतीयोऽङ्कः

( ततः प्रविशति तेजःपालेनानुगम्यमानो वीरधवलः )

वीरधवलः—अये विभातशेषैव विभावरी । तथाहि—

आदौ विष्णुपदं निषेव्य यदुरीचक्रे पतिर्यज्वनां
ज्योत्स्नामण्डलकैतवाद्धवलितत्रैलोक्यमेकं यशः ।
भ्रान्तध्वान्तपदात्तदेव तनुते तस्याधुना वारुणी-
सेवोत्फुल्लकलङ्ककश्मलकलाचक्रस्य दुष्कीर्त्तिताम् ॥ १ ॥

( विमृश्य च ) भृशमशेषरजनिजागरणजर्जरितमहसि कुमुद्वतीकामुके,

पुरक्ष्माभृत्कुञ्जान्तरतरणिदीपाञ्जनभरैः
पदभ्रश्यत्तारावलिकलितनिःश्वासनिवहैः ।
तमःपूरैर्दूरव्यवसितचकोरप्रणयिनी-
चयाचान्तज्योत्स्नाजलबहुलपङ्कैः प्रववृते ॥ २ ॥

इतश्च—

तिमिरमसितवासः कञ्चुकाभं विमोच्य
द्युमणिरनणुरागो गुप्तचर्याप्रवीणः ।
उदयशिखरिमौलौ निर्ममे वासवाशा-
कुचसदृशि करोद्यत्कुङ्कुमैः पत्रवल्लीम् ॥ ३ ॥

( विलोक्य च ) अये त्रिभुवनजननयनपक्ष्मकपाटपुटसमुद्घाटनकुटिलकुञ्चिकाङ्कुरः पुरः स्फुरत्ययमुदयाभिमुखस्य,

पूर्वाशाकुचकल्पपूर्वशिखरिप्रेङ्खन्नखाङ्कस्तम-
स्तोमत्रासविभासिवासरधनुः शक्रेभकुम्भाङ्कुशः ।
व्योमश्रीश्रुतिपूरकिंशुकदलं भूमुक्तचन्द्रस्फुर-
द्दुःखव्याकुलरात्रिलग्नवलयं देवस्य भानोर्लवः ॥ ४ ॥

अये ! निजवियोगसङ्कुचितपङ्कजिनीसमालोकनसमुत्सुक इव कियता वेगेन समुत्पतत्यसौ दिवसपतिः । तदिदानीम्,

अर्द्धोदितार्कमिषतो दिवसश्चकार
प्राच्या मुखे घुसृणपङ्कललाटिकां यत् ।

तेनाऽधुनाऽभिनवदीधितिकैतवेन
क्रोधादिवापुरपराः ककुभोऽरुणत्वम् ॥ ५ ॥

अहो! महस्विना सह विग्रहारम्भो निशितव्यसनोल्लासायैव ।

काष्ठाबद्धान्तरिक्षाहवभुवि विकसत्तारकापुष्पहस्तः
संपूर्णश्चन्द्रयोद्धा कृतकरविततिः स्फायमानस्फुरश्रीः ।
दृष्ट्वा शूराङ्कारं निहितकरगणं दूरतोऽप्युत्पतन्तं
त्रस्तः संन्यस्तहेतिर्झगिति गिरितटे लक्ष्मघातः पपात ॥ ६ ॥

इदानीं तु,

हरिहयहरिदङ्कन्यस्तमूर्त्तिः समस्तां
कवलयति कराग्रैरेष नक्षत्रमालाम् ।
उदयदतुलतापो दाडिमीबीजराजी-
सदृशमुखविकीर्णामम्बरे बालसूर्यः ॥ ७ ॥

( विभाव्य च ) अये! बालप्रद्योतनपादाग्रप्रहतः कञ्चुक इव क्व जगाम कुमुदिनीजानिः । सम्प्रति हि,

अम्भोजिनीभिरमुना तपनातपेन
त्यक्ता तुषारकरजाड्यकृतेव मूर्च्छा ।
कान्तप्रसङ्गरजनीकृतजागरेव
साक्षादियं कुमुदिनी च ततान निद्राम् ॥ ८ ॥

तेजःपालः—देव ! गतानुगतिक एवायं लोकः । तथाहि—

सुधादृष्टिव्यग्रे विलसति सुधाधामनि सुधा-
मवर्षन्नुत्कर्षान्निशि शशिदृषद्भिः क्षितिभृतः ।
वितन्वाने तापव्यतिकरमिदानीं दिनकरे
कराला ज्वालालीस्तरणिमणिभिर्बिभ्रति पुनः ॥ ९ ॥

वीरधवलः—नूनं तनुमतां यथारुच्यैव रोचते वस्तुषु स्वभावः ।

रथाङ्गानङ्गैरैरिव हिमकरो नक्तमसिच-
न्मयूखैः पीयूषैरिव खरकरः सम्प्रति पुनः ।
प्रदीपप्रागल्भीमकलयदुलूकस्य तिमिरं
तमस्विन्यां किञ्च द्युमणिमधुना ध्वान्तपदवीम् ॥ १० ॥

( तेजःपालं प्रति ) मन्त्रिमाणिक्य ! प्रमोदातिशयादग्रहणीयदूषणमनुभवपुनरुक्तं किमपि वदामि ।

लीलानुरञ्जितमहीवलयः सहस्र-
पत्रप्रकाशनपरः किरणप्ररोहः ।
निन्येऽधुना दिनपतिं महिमानमुच्चैः
श्रीवस्तुपालसचिवो ननु मामिवासौ ॥ ११ ॥

( विहस्य च ) सोऽपि तावदद्भुतभुजभुजङ्गराजकृष्णायमानकृपाणवशीकृतश्रीः सैन्धुराजिरपि मैत्र्यधुराभधिरूढोऽस्माकं सचिवेन्द्रशेमुषीगुणावलम्बेन । तं पुनः प्रतिपार्थिवायुर्वायुकवलनप्रसर्पदसितसर्पायमाणकृपाणदर्पस्मितमस्मदमिलितं मेदपाटपृथिवीललाटमण्डलं जयतलं विग्रहीतुं कृतादरस्य हम्मीरमहीशितुः किंवदन्तीं निवेदयितुमद्यापि न कोऽपि दूतः समुपैति ।

( ततः प्रविशति सम्भ्रान्तः पुरुषः )

**पुरुषः**—( पुरो निरूप्य ) अये किमिहच्चेव सुरनाहविहप्पइव्व सिरिवीरधवलतेअवालसचिवपाया चिट्ठंति ।[1]

( इति सत्वरं किञ्चिदुपसृत्य नृपं प्रणमति )

**तेजःपालः**—( नरेन्द्रं प्रति ) देव ! स एवायं कमलको नाम चरस्तुरष्कचरितानि चरितुं प्रहितोऽभूत् ।

**कमलकः**—णाह[2] ! दाहविहं सअलंपि मेअवाडयं हम्मीरवीरेहिं ।

**वीरधवलः**—कथमिव ? ।

**कमलकः**—अचिंतियचलिएहिं[3] तेहिं अकिवत्तणकणकूडघडिएहिं व अयालजणकवलणकोऊहलबहुलीकयकयंतमुहनीहरियरसणेहिं खग्गसणाहकरेहिं दसमदारदूरुल्लसियकूरज्झाणकिरणनिउरुंबसरिसकविसकेसेहिं पलयारंभत्थत्थंभियसधूमकालानलविप्फुलिंगपिंगनयणेहिं धम्मिट्ठलोयनिट्ठवणुक्कंठियक-

---

१ अये किमिहैव सुरनाथबृहस्पती इव श्रीवीरधवलतेजःपालपादाः तिष्ठन्ति ।

२ नाथ ! दाहितं सकलमपि मेदपाटकं हम्मीरवीरैः ।

३ अचिन्तितचलितैस्तैः अकृपत्वकणकूटघटितैरिवाकालजनकवलनकौतूहलबहुलीकृतकृतान्तमुखनिस्सृरितरसनैः खड्गसनाथकरैः दशमद्वारदूरोल्लसितक्रूरध्यानकिरणनिकुरुम्बसदृशकपिशकेशैः प्रलयारम्भार्थोत्थम्भितसधूमकालानलविस्फुलिङ्गपिङ्गनयनैः धर्मिष्ठलोकनिष्ठापनोत्कण्ठितकलिकालकृ-

लिकालकियनियंगपूगेहिं वई(?)सरिच्छजीवियसयलकप्पकीणासकुडुंबेहिं व ग-ब्भिणीगब्भगालणगरुअगहिरसीहसद्देहिं उच्चंडियकोअंडगुणटंकारकवलियहयहेसियरवेहिं मारेह मारेहित्ति भासमाणेहिं दावानलकीलाकलावेहिं व पुरपविट्ठेहिं विहुरिओ सयलोवि लोओ ।

वीरधवलः—तदिति पुरपारवश्यं निरूप्य किं प्रतिपन्नं मेदपाटपतिना ? ।

कमलकः—किं पडिवन्नं ! जं हम्मीरवीरेहिं पसरियपहरणेहिं पडिवज्जीयदि ।

वीरधवलः—( सरोमाञ्चम् ) किमेष निजपरुषपौरुषोत्तेजनाय शाणीचक्रे रिपुचक्रम् ? ।

कमलकः—( सहासम् ) भमिपरिभमियसरीरो बालुव्व सव्वंपि अप्पणसरिसं पेक्खेसि ।

को तुह विणु सुसमत्थो इत्थं हम्मीरअहिमुहो फुरइ ।
विणु कालचित्तयलयं को जलपूरस्स संमुहं चडइ ॥

वीरधवलः—( सावज्ञमिव ) किमयमप्यन्ध इव परिहृतप्रवीरमार्गः पपात दुर्यशोऽन्धकूपे ? ।

कमलकः—अह किं ।

वीरधवलः—( सनिःश्वासम् ) धिग् धिग् रे पौरुषं जन्मान्तर अतिथीभविष्यति मृत्यौ किमिव परिहृतं धारातीर्थमिदम् ।

युद्धे दृग्जलकज्जलैर्भुजभृतः शत्रुप्रियाणां निज-
स्त्रीणां वा वदनेन्दुमण्डलमहो चिन्होचितं कुर्वते ।

---

तनिजाङ्गपूगैः (?)सदृशजीवितसकलकल्पकीनाशकुटुम्बैरिव गर्भिणीगर्भगालनगुरुकगभीरसिंहशब्दैः उच्चण्डितकोदण्डगुणटङ्कारकवलितहयहेषितरवैः मारयत मारयतेति भाषमाणैः दावानलकीलाकलापैरिव पुरप्रविष्टैः विधुरितः सर्वोऽपि लोकः ।

२ किं प्रतिपन्नं ! यत् पतिपन्नं यत् हम्मीरवीरैः प्रसृतप्रहरणैः प्रतिपाद्यते । ३ भ्रमिपरिभ्रमितशरीरो बाल इव सर्वमपि आत्मसदृशं पश्यसि ॥

कस्तव विना सुसमर्थ एवं हम्मीराभिमुखः स्फुरति ।
विना कालचित्रकलतां कः जलपूरस्य सम्मुखं चटति ॥

आत्मानं च परांश्च गोत्रमपि च क्षत्रव्रतं च क्षणा-
त्प्रालेयांशुकलं कलङ्कयति कस्त्वत्स्यन्भवन्तं विना ॥ १२ ॥

ततस्ततः ।

कमलकः—[1]तओ कयसतिणब्भवहारेसु कुकइकव्वेसु व बहुयबालबंभ-णगोउलमहिलामहणपयट्टिएसु तेसु हा रक्खध रक्खध पधावद पधावद धुत्तेहिं व मिच्चुअहिदेवएहिं मारिज्जंतं सयललोयमिमं। कधं तिहुयणे वि न कोवि विप्फुरइ खत्तियफुलिंगो । न कस्सवि विहसइ हिययम्मि साहसरसो । पडिओ कत्थ वि अंधकूवे पोरिसुक्करिसो ।

तेजःपालः—

*तेऽपि त्वत्पदपूरपिष्टपृथिवीपातभ्रमात्पन्नगाः
पाताले विकलं वलंति किमु तत्पाताऽसि विश्वत्रयीम् ॥

वीरधवलः—(सत्रपातिरेकं कोशकवलितकरवालः समुपविश्य कमलकं प्रति) ततस्ततः।

कमलकः—[2]तओ नूणं अवीरप्पसवा एसा भयवई पुहवी न उण कावि खत्तिणी कत्थवि परदुक्खदुक्खियं तणयं पसूयत्ति झत्ति कलियाउलकलय-लेसु तेसु नयरिनिवासिलोएसु न कोवि कुदोवि उक्कंठिअंगो धाविओ खत्ति-यकुमारो ।

वीरधवलः—( सखेदम् ) धिक् कष्टमियमुत्सन्नैव क्षितौ क्षत्रजातिः । ततस्ततः ।

कमलकः—[3]तओ ताणं अविसंकियहिययाणं तिव्वतरवारिदारियज-णउअरुच्छलियरुहिरवारुणीरसणोवदंसीकयकालहंडहंडाणं कीलालकद्दमिय-कुचयकेसाणं मलिणजाईणं अइभएण ताणं ।

---

१ ततः कृतसतृणाभ्यवहारेषु कुकविकाव्येष्विव बहुबालगोपालब्राह्मणगोकुलमहिलामथनप्रवर्त्तितेषु तेषु हा ! रक्षत रक्षत, धावत, धावत धूर्तैरिव मृत्यधिदैवतैः मार्यमाणं सकललोकमिमम् । कथं त्रिभुवनेऽपि न कोऽपि विस्फुरति क्षत्रियस्फुलिङ्गः, न कस्यापि विहसति हृदये साहसरसः, पतितः कुत्राप्यन्धकूपे पौरुषोत्कर्षः। * Ink having faded on leaves 46 b (of 2 lines) and 47 b (of 4 lines) of the palm-leaf ms., it is impossible to make out 6 lines of 45 letters each and hence that much portion is left out before this. २ ततो नूनमवीरप्रसवा एषा भगवती पृथ्वी न पुनः कापि क्षत्रिणी कुत्रापि परदुःखदुःखितं तनयं प्रसूतेति झटिति कलिताकुलकलकलेषु तेषु नगरनिवासिलोकेषु न कोऽपि कुतोऽपि उत्कण्ठिताङ्गो धावितः क्षत्रियकुमारः । ३ ततस्तेषामविशङ्कितहृदयानां तीव्रत-

हा ताय हा तणय हा पिय हा मइच्छि
　　हा भाय हा भगिणी हा भड हा सुणाह ।
एवं जणाण विहुराण परप्परम्मि
　　कोलाहलेहि फुडियं हिययं न कस्स ॥

वीरधवलः—( सबाष्पकण्ठगद्गदाक्षरम् ) ततस्ततः ।

कमलकः—तओ मलिणजणहत्थमरणेण न होइ गई । इय चिंतिऊण गलनिगडियरडंतबालाइं कूएसु पडियाइं काइवि मिहुणाइं । कत्थ पच्छावि चिअदहणदहणं विणावि गइसंभवो होइत्ति केवि सयलनियकुडुंबपूरियंतरेसु सव्वओवि जलणं पज्जालिऊण पविट्ठा सयंज्जेव नियमंदिरेसु पुरिसा । न हु पिक्खिस्सं मारियमाणस्स नियजणस्स दुहंति केवि कंठसंठवियरज्जुग्गहा कयपरिकंदेसु कुडुंवेसु मरणं संपत्ता । केवि पडंतेसु रिउखग्गवग्गघाएसु विहुरनियगब्भरूवचूयाणं उवरिपरिवडियनियकलत्तमरणखणविग्घरूवीभूया । केवि पुट्ठिसंठावियनिहुयरडंतनियकुडुंबा अमरिसरसुल्लसिया उद्धसिअंगा धसिऊण रिउसिन्नसमुद्दे वडवग्गिफुलिंगत्तणं पत्ता ।

वीरधवलः—साधु भोः सुभटचूडामणयः ! साधु ! साधु भो विपक्षपक्षकक्षाशुशुक्षणयः साधु ! । युष्मानेव दोष्मतः सात्त्विकराजान् धारयन्ती राजधानीति सान्वयमभिधानमधत्त मेदपाटपुरी । यतः—

---

खारिदारितजनोदरोच्छलितरुधिरवारुणीरसनोपदंशीकृतकालखण्डखण्डानां कीलालकर्दमितकूर्चककेशानां मलिनजातीनामतिभयेन तेषां ।

　　हा तात हा तनय हा प्रिय हा मृगाक्षि हा भ्रातः हा भगिनि हा भड हा सुनाथ ।
　　एवं जनानां विधुराणां परस्परं कोलाहलैः स्फुटितं हृदयं न कस्य ॥

१ ततो मलिनजनहस्तमरणेन न भवति गतिरिति चिन्तयित्वा गलनिगडितरुदद्बालानि कूपेषु पतितानि कान्यपि मिथुनानि । कुत्र पश्चादपि चितादहनं विनाऽपि गतिसंभवो भवतीति केऽपि निजकुटुम्बपूरितान्तरेषु सर्वतोऽपि ज्वलनं प्रज्ज्वाल्य प्रविष्टाः स्वयमेव निजमन्दिरेषु पुरुषाः । न खलु प्रेक्षिष्ये मार्यमाणस्य निजजनस्य दुःखमिति केऽपि कण्ठसंस्थापितरज्जुग्रहाः कृतपरिक्रन्देषु कुटुम्बेषु मरणं सम्प्राप्ताः । केऽपि पतत्सु रिपुखड्गवर्गघातेषु विधुरनिजगर्भरूपच्युतानामुपरि परिपतितनिजकलत्रमरणक्षणविघ्नरूपीभूताः । केऽपि पृष्ठसंस्थापितनिभृतरुदन्निजकुटुम्बा अमर्षरसोल्लसिता उद्धसिताङ्गा धसित्वा रिपुसैन्यसमुद्रे वाडवाग्निस्फुलिङ्गत्वं प्राप्ताः ।

त्रस्तेषु तेषु सुभटेषु विभौ च भग्ने
मग्नासु कीर्त्तिषु निरीक्ष्य जनं भयार्तम्।
यो मित्रबान्धववधूजनवारितोऽपि वेल्ग-
वेल्गा त्यरीन्प्रति रसेन स एव वीरः ॥

ततस्ततः।

कमलकः—तओ जणणि जणणि अहंपि समंज्येव समागमिस्सं, अंब अंब मं खुहियतिसिअं परिहरिऊण कत्थ वच्चसि, ताय ताय सव्वयावि मं गहिऊण नयरमज्झम्मि जाएसि, ता कहं अहुणा मं मिल्हसित्ति, संतट्ठपियरजणमुक्काइं विलवंताइं वि बालयमंडलाइं मारिउं पयट्टेसु तेसु निग्घिणेसु कलियतुरक्कवेसेण तम्मज्झवट्टिणा लोअकरुणाए मए गरुअसद्देण भणियं जं पलायध रे पलायध विक्कमक्कमियतियलोओ कुदोवि जणरक्खणत्थं संपत्तो एसो वीरधवलो। एरिसेण अलियवयणेण वि भयभंगुरपोरिसा सव्वओ विप्पणट्ठा ते दुट्ठा। तेण पुरीलोएण वि मह वयणं सुणिऊण नाह नाह साहसनिहाण एदे अम्हाणं कुडुंबं मारिऊण रिउणो तुह पिक्खंतस्स पलायंति।

वीरधवलः—( कृपाणिकानिहितपाणिः समुत्थाय ) क्कामी क्कामी। ( इति उद्धतपदपातभङ्गुरभूविभागं प्रधावति )

तेजःपालः—देव! देव! कोऽसौ ते साहसरसवशंवदहृदयस्य पुनः पुनरपि मतिविभ्रमः।

वीरधवलः—( सलज्जमपसृत्योपविश्य च ) ततस्ततः।

कमलकः—तओ। एयं जंपंतेण कत्थ कत्थ सो अम्हाण अगालनायगो कत्थ कत्थ सो अम्हाणं जीवियसंधाणकारओ, कत्थ कत्थ सो तिहुयणस्स

---

१ ततः जननि जननि अहमपि सममेव समागमिष्ये, अम्ब अम्ब मां क्षुधिततृषितं परिहृत्य कुत्र व्रजसि, तात तात सर्वदापि मां गृहीत्वा नगरमध्ये यासि, तत्कथमधुना मां मुञ्चसीति, संत्रस्तपितृजनमुक्तानि विलपन्त्यपि बालकमण्डलानि मारितुं प्रवृत्तेषु तेषु निर्घृणेषु कलिततुरुष्कवेषेण तन्मध्यवर्त्तिना लोककरुणया मया गुरुकशब्देन भणितं यत्पलायध्वं रे पलायध्वं विक्रमक्रमितत्रिलोकः कुतोऽपि जनसंरक्षणार्थं सम्प्राप्त एव वीरधवलः। एतादृशेन अलीकवचनेनापि भयभंगुरपौरुषाः सर्वतः विप्रणष्टाः ते दुष्टाः। तेन पुरीलोकेनापि मम वचनं श्रुत्वा नाथ नाथ साहसनिधान एते अस्माकं कुटुम्बं मारयित्वा रिपवः तव प्रेक्षमाणस्य पलायन्ते। २ ततः। एतत्कथयता कुत्र कुत्र सोऽस्माकमकालनायकः,

विहुरबंधू, कत्थ कत्थ सो वसणवडियाणं विहिणा अलिहियं भायधेयंति, विरइयपमोयसद्देण विसुमरियरिउघायजायपीडेण, हरिसुल्लसियरोमंचराइराइयसरीरेण हिययमज्झम्मि अमायंतेहिं व पमोयरसेहिं नीसरंतेहिं वयणमग्गेण हसियमयूहेहि धवलियनहंगणेण मलिणरिउजणदंसणमलिणीकयाइं सुज्झविउं सवणंतवित्थरियाइं नियलोयणाइं तुह मुहसुहाकुंडदंसणत्थं सरसाइं सव्वासु दिसासु परिक्खवियाइं । तओ तुमं अपिक्खंतेण दंसणुक्कंठिएण परिधाविअं सयलनयरमग्गेसु । कत्थ सो कत्थ सो नाहुत्ति भासमाणे तुह अदंसणविहुरिए तत्थ लोए तक्खणमुक्कतुरुक्कवेसेण मए भणियं ।

वीरधवलः—( सौत्सुक्यम् ) किं तत् ।

कमलकः—( संस्कृतमाश्रित्य ) यदयमदयारिदारणदारुणकृपाणरुचिनिचयरचितमूर्त्तकालरात्रिप्रपञ्चः द्वादशार्ककर्कशलसद्विलोचनरोचिर्गतिस्तम्भितवनसंरम्भेण निजमनसेव त्वरमाणेन तुरगेण हम्मीरवीरानयमनुधावति वीरधवलः।

इत्याकर्ण्य गिरं भमोत्सुकतमो लोकस्तदालोकन-
व्यासङ्गेन यथा यथा द्रुतगतिर्जातोऽनु शत्रूनिमान् ।
तूर्णं तेऽपि तथा तथा भयभृतो नेशुस्तुरङ्गैर्द्रुतै-
रासन्नोऽयमुपैति वीरधवलोऽस्मान् हन्तुमित्यातुराः ॥

तेजःपालः—धिग् धिग् रे मूढाः ! अप्ररूढधियामपरमार्थदर्शिनां कोऽयं भवतां भयातिरेकः समरसमारम्भेषु ।

पूर्वं शर्वरघूद्वहार्जुनभुजैर्धन्वैव निन्ये परां
प्रागल्भीमसुनाऽहमेव तु चिरादित्युन्मदोऽसिर्मुदा ।
अभ्यर्च्य क्षतहस्तिमस्तकमणिस्तोमैः प्रतीपार्चिषा
यं नीराजयते स वीरधवलो नाम्नाऽपि भीत्यै न किम् ॥

---

कुत्र कुत्र सोऽस्माकं जीवितसन्धानकारकः, कुत्र कुत्र सः विधुरबन्धुः, कुत्र कुत्र स व्यसनपतितानां विधिना अलिखितं भागधेयमिति विरचितप्रमोदशब्देन विस्मृतरिपुघातजातपीडेन हर्षोल्लसितरोमाञ्चराजिराजितशरीरेण हृदयमध्ये अमाद्भिरिव प्रमोदरसैः निःसरद्भिः वदनमार्गेण हसितमयूखैः धवलितनभोङ्गणेन मलिनरिपुजनदर्शनमलिनीकृतानि शोधयितुं श्रवणान्तविस्तृतानि निजलोचनानि तव मुखसुधाकुण्डदर्शनार्थं सरसानि सर्वासु दिशासु परिक्षिप्तानि । ततः युष्मानप्रेक्षमाणेन दर्शनोत्कण्ठितेन परिधावितं सकलनगरमार्गेषु । कुत्र स कुत्र स नाथ इति भाषमाणे तव अदर्शनविधुरिते तत्र लोके तत्क्षणमुक्ततुरुष्कवेषेण मया भणितम् ।

वीरधवलः—सखे तेजःपाल ! मास्मेदं वादीः । किं कदाचिदपि मयापि कृपाणपाणिना किमपि समरकर्म निर्मीयते स्म ।

शश्वद्दैवतपूर्वदैवतगुरुद्वन्द्वेन बद्धस्पृहं
साक्षाद्वीक्षितया फलव्यतिकरव्यक्तीकृतारम्भया ।
बुद्ध्यैव प्रलयं नयन् रिपुचयं मन्नाम भीमं चिरा-
च्चक्रे चण्डपगोत्रमण्डनमणिर्मत्कामचिन्तामणिः ॥

युक्तं च तत्र तत्रसुमेदपाटलुण्टाका मन्दधियो वराकाः ।

सन्दोहस्य सुरद्रुहामिव कविर्वाचस्पतिः स्वर्गिणां
वर्गस्येव ममैष चण्डपकुलालङ्काररत्नाङ्कुरः ।
किं तस्याप्यरिसञ्चयस्य सचिवः कश्चिच्चमत्कारिणीं
शिक्षां वक्ति यया स्फुरन्ति फलिनस्ते विक्रमोपक्रमाः ॥

(सशिरोनर्त्तनं च) किमेकमहं महेयमस्य माहात्म्यं महामात्यश्रीवस्तुपालस्य ।

मतिः कल्पलता यस्य मनःस्थानकरोपिता ।
फलं गूर्ज्जरभूपानां सङ्कल्पितमकल्पयत् ॥

किञ्च—सिक्तोऽस्य बुद्धिसुधया विभवत्युत्साहपादपोऽयं मे ।
नृपनिकरमौलिधार्या यत्कुसुमस्रग् ममाज्ञेव ॥

(सप्रहर्षं च) दूरादुज्झितमानशुद्धमनसः शान्तप्रतापांशुम-
त्तत्कालोदितदुर्यशोमयतमश्चक्रोचितं चक्रिरे ।
तैरेतन्मतिदूतिकापरिचयैरभ्येत्य भूमीभुजो
भूमेर्मत्पदपीठशेखरजुषः सर्वाङ्गमालिङ्गनम् ॥

किञ्च । मया सचिवेन्द्रमतिमयायुधेन व्यजीयत सकलमपि म्लेच्छकुलावशिष्टमेतद्विष्टपम् ।

तेजःपालः—देव ! शौर्यश्रीविलासवासनिलय ! हम्मीरशक्तिविलयकृतेऽपि कृतप्रयोगोऽस्त्यार्यः । तदिहापि निश्चिन्तीभवतु भवतां मनः ।

वीरधवलः—तदत्र कर्मण्यवधीयतां भवद्भिः । अहमपि मिलिताखिलक्षितिपालवर्गप्रेमसंवर्गणेन निराशीकरोमि रिपुनृपतिगूढचरचक्रवालम् ।

(इति निष्क्रान्ताः सर्वे)

तृतीयोऽङ्कः

---

# चतुर्थोऽङ्कः

( ततः प्रविशति तुरुष्करूपधारी चरः )

चरः—( सान्तस्तोषम् ) अम्महे अपुरवो महंदोविय कोवि मंतो सिरितेअवालस्स । जेण जज्जरिदं सयलंपि अरादिभूवदिजादं ।

( सप्रमोदप्रकर्षं च )

सिरिवत्थुवालसिक्खाकदगहलखोदसंगमुल्लसिदा ।
अहरिदरिउउलपंका जयदि मदी तेअवालस्स ॥ १ ॥

( पुरोऽवलोक्य सस्मितम् ) कथं इधज्जेव कुवलयाभिहाणो मह पुरवभूदभादा आगच्छदि ।

( ततः प्रविशति तद्वेषधारी कुवलयकः )

कुवलयकः—णाधपसादे अम्हाहं भस्टजादिभूदाहं ।
एसे तुलुक्कवेसे लक्खसतुल्लेविय सुहत्थं ॥ २ ॥

( पुरो निरूप्य ) अये मह लहुयबंधवे सिग्घगनामधेए पुलदो पेक्खदे । ( शीघ्रक उपसृत्य प्रणमति ) वत्स ! कुदो दाणिं पत्थीयसि ।

शीघ्रकः—अँज्ज ! मए सिरितेअवालमंतिमंतिदपधिदपयोगेण खप्परखाणभूवदिच्छलदूदीभोदूण सयलमिलिच्छजादिनरिंदनाधस्स बगदादिविसयवसुहाहिवस्स खलीपनामधेयस्स पुरो गच्छिय विन्नत्तं । जं नाह ! फुरिदाहं-

---

१ अहो ! अपूर्वो महानेव कोऽपि मन्त्रः श्रीतेजःपालस्य । येन जर्जरितं सकलमपि अरातिभूपतिजातम् ।

२ श्रीवस्तुपालशिक्षाकतकफलक्षोदसङ्गमोल्लसिता ।
अधरितरिपुकुलपङ्का जयति मतिः तेजःपालस्य ॥

३ कथमिहैव कुवलयाभिधानो मम पूर्वभूतभ्राता आगच्छति ।

४ ...नाथप्रसादः अस्माकं भट्टजातिभूतानाम् । एष तुरुष्कवेषः राक्षसतुल्योऽपि सुखार्थम् ॥ अये मम लघुकबान्धवः शीघ्रकनामधेयः पुरतः प्रेक्ष्यते । वत्स ! कुत इदानीं प्रतिष्ठसे ।

५ आर्य ! मया श्रीतेजःपालमतिमन्त्रितप्रहितप्रयोगेन खर्परखानभूपतिच्छलदूतीभूय सकलम्लेच्छजातिनरेन्द्रनाथस्य बगदादिविषयवसुधाधिपस्य खलीपनामधेयस्य पुरः गत्वा विज्ञप्तम् । यन्नाथ !

कारहुंकारमुहरिदकंठंतरो तिहुयणतवणीभूदपयावाहं तुम्हाहंपि सयलरायचूडामणिपहाणाए आणाए न वट्टदि कदमुट्टिमंगीकारो मीलच्छीकारो। ता एदं आकन्निदूण कुविदेण तेण पिधिवीनाधेण तए निगडिदूण कदाहिणिवेसो अम्हाहं पासम्मि पट्ठावइदव्वुत्ति लिहिदरायादेसहत्थो अहंज्जेव पेसिदो। ता मए तत्थ बगदादिनरिंदपेसिदो दूदोहं आगदुत्ति खप्परखाणनरिंदस्स सो रायादेसो समप्पिदो। ता तस्स रायादेसस्स दंसणमत्तेणवि मीलच्छीकारदेसोवरि चलिदो खप्परखाणराया। अध मए गूणपणिधिरूवेण देसरक्खणवियक्खणस्स मीलच्छीकारनंदणस्स निवेदिदं तं विग्गहुट्ठाणं। ता इमिणा वि आउलीभूदेण मीलच्छीकारस्स कधिदुं पधाविदुम्हि।

कुवलयकः—भो मदिशालिया शाहु शाहु तए लविदं। मएवि गूढपुलिशत्तं पत्तेण गुज्जललाया तुम्हाहं मालिदतुलुक्कदेशंपि शयलंपि दाइस्सदि। ता तुम्हेहिं शमलशमयंमि न जुज्झियव्वंति वयणेहिं तोसिदूण भेदिदे गुलवालपदावसीहपभिदिगुजलमंडलेशलसमूहे। ता जज्जलियं सयलं पि लिउलायचक्कं।

शीघ्रकः—अम्हहे फलिदा सचिवरायस्य मदिलदा। दाणिं खप्परखाणपयाणकधाए विहुरं करेमि मीलच्छीकारस्स कडयं।

---

स्फुरिताहङ्कारहुङ्कारमुखरितकण्ठान्तरः त्रिभुवनतपनीभूतप्रतापानां युष्माकमपि सकलराजचूडामणिप्रधानायामाज्ञायां न वर्त्तते कृतमहत्त्वाङ्गीकारो मीलच्छ्रीकारः। तदेतदाकर्ण्य कुपितेन तेन पृथ्वीनाथेन त्वया निगडयित्वा कृताभिनिवेशोऽस्माकं पार्श्वे प्रस्थापयितव्य इति लिखितराजादेशहस्तः अहमेव प्रेषितः। तन्मया तत्र बगदादिनरेन्द्रप्रेषितः दूतोऽहमागत इति खर्परखाननरेन्द्रस्य स राजादेशः समर्पितः। तत्तस्य राजादेशस्य दर्शनमात्रेणापि मीलच्छ्रीकारदेशोपरि चलितः खर्परखानराजः। अथ मया गूढप्रणिधिरूपेण देशरक्षणविचक्षणस्य मीलच्छ्रीकारनन्दनस्य निवेदितं तद्विग्रहोत्थानम्। तदमुनापि आकुलीभूतेन मीलच्छ्रीकाराय कथयितुं प्रधावितोऽस्मि।

१ भो मतिशालिन् साधु साधु त्वया लपितं। मयापि गूढपुरुषत्वं प्राप्तेन गूर्जरराजः युष्माकं मारिततुरुष्कदेशमपि सकलं दास्यति। तद्युष्माभिः समरसमये न योद्धव्यमिति वचनैः तोषयित्वा भेदितः कुरपालप्रतापसिंहप्रभृतिगूर्जरमण्डलेश्वरसमूहः। तज्जर्जरितं सकलमपि रिपुराजचक्रम्।
२ अहो! फलिता सचिवराजस्य मतिलता। इदानीं खर्परखानप्रयाणकथया विधुरं करोमि मीलच्छ्रीकारस्य कटकम्।

**कुवलयकः**—[1]हंगे वि भेदिदविपक्खपक्खनलवइकिंवयंतीए हलसियं कलिय दावइस्सं पयाणयं सिलिवीलधवललायादो ।

इति निष्क्रान्तौ ।

( प्रवेशकः )

( ततः प्रविशति चिन्ताक्रोधविषादव्रीडाविभज्यमानमानसो यथोचितवेषो गोरीईसपनाम्ना प्रधानपुरुषेण सह मीलच्छीकारः )

**मील०**—[2]चाणामि त्तासितं तं चनवतमथुला खप्पणक्खानलावा
जं पत्तो सो छलेहिं लिउचनविथुलं मं चिलं चाणितूण ।
मंतूनं तेसफंकं कडयफडखडावचलासाविवाता
ताही तत्तं पयानं निचफुचमतिना कुचलेसेन तेन ॥ ३ ॥

( प्रधानं प्रति ) [3]चैलमुहादो चानितून तं विग्गहुट्ठाणं ताव पिसितं मए कुवितपगतातिफूवतितोसणनिमित्तयं रदीकादीफिहाणं निचकुलयुकलं तुह मंतपयोकेन । ता किं दाणिं जुत्तं ।

**प्रधानः**—( साभिप्रायोल्लासं ) [4]तेवँ तनुतनुच कुलु चालु विचालं । संपति अवदालनं ज्येव लवित्त न लक्खिज्जते निचतेसो । अन्नधा खप्पलखानलावलुंटितनिचचनवतसोगतूनमानसोज्झित्तनजुवलावो तुम्हाहं पवुत्तावहितपसल्लं हुविज्ज । ता इत्थ लियुचयचयलच्छी नहितए कामं तत्थं होति ।

**मील०**—( सक्रोधहासावेशम् ) धिक्कूँ धिक्कू ले फपलाचलावघाती सति सहितए मह पोलिसपातपुग्गूलनमत्ततंतावलुच तुह मंतो ।

---

१ अहमपि भेदितविपक्षपक्षनरपतिकिंवदन्त्या हर्षितं कृत्वा दापयिष्ये प्रयाणकं श्रीवीरधवलराजात् ।

२ जानामि त्रासितं तं मथुराजनपदं खर्परखानराजः
यत्प्राप्तोऽसौ छलैः रिपुजनविधुरं मां चिरं ज्ञात्वा ।
मत्त्वा देशभङ्गं कटकभटघटाप्रत्यला ····
तस्माद्दत्तं प्रयाणं निजभुज··गूर्जरेशेन तेन ॥

३ चरमुखात् ज्ञात्वा तद्विग्रहोत्थानं तावत्प्रेषितं मया कुपितबगदादिभूपतितोषणनिमित्तं रदीकाद्यभिधानं निजगुरुयुगलं तव मन्त्रप्रयोगेण । तत्किमिदानीं युक्तम् । ४ देव दनुतनुज कुरु चारु विचारम् । सम्प्रति अवदारणमेव ··· न रक्षिष्यते निजदेशः । अन्यथा खर्परखानराजलुण्टितनिजजनपदशोकदूनमानसोज्झित ····· युष्माकं ········· भवतु । तदत्र रिपुजयजय लक्ष्मी ···· भवति ।
५ The text seems corrupt.

तेसो एस पयातु लक्कशमुहे अक्कालकत्तंलता
सो पुत्तो वि छडित्ति जातु मलणं किं तेहिं सोहं उण ।
संकट्ठे मिलने पतंयति पलं दत्थून ता कंपते
सल्लं वालिनिथी पयोथलखडापाणेहिं निट्ठीयति ॥ ४ ॥

( नेपथ्ये कलकलः )

( सभयसंभ्रमम् ) कधं एसो कप्पंतकुवियकीनाशकठोलताठाचव्वियमानशलीलस्स सयलस्सवि अतिमधितपयोनिथिसमुच्छलियकालकूडालोयनपलाइतसुलासुलकेशलविलवितकोलाहलसतिसो कलयलो सुणीयति कंथावालस्स ।

( पुनर्नेपथ्ये )

नाध ! नाध ! लक्ख ! लक्ख ! एदे कवलनुक्कंठियजमकिंकला इव पहलनपूलकलालकला इधज्जेव धावंति केवि सुफडा ।

मील०—के एसे अपुरव्वुप्पातुव्व मह सिबिलमज्झम्मि ।

( पुनर्नेपथ्ये )

कत्थ रे कत्थ! सो नियभुयजुयलबलगलहत्थियकीनाशसारो मीलच्छीकारो ।

मील०—(सभयकम्पम्) अले ! वीलधवल पलग्गे सलथाणुक्कथोलणिकोवनातिव्व एसो ।

( पुनर्नेपथ्ये )

नूनं नत्थि कत्थवि अम्हाहं नाहो। अन्नधा कधं एतिसेहिंवि विधुलविधुलेहिं कोलाहलेहिं अम्ह लक्खणत्थं न धावति ।

---

१ देश एष प्रयातु राक्षसमुखे ·······
स पुत्रोपि झटिति जातु मरणं किं तैः सौख्यं पुनः ।
सङ्कष्टे मिलिते ···· बलं द्रष्ट्वा तं कम्पते
शल्यं वारिनिधिः पयोधरघटापानीयैः निष्ठीयते ॥

कथमेष कल्पान्तकुपितकीनाशकठोरदाढाचर्व्यमानशरीरस्य सकलस्यापि अतिमथितपयोनिधिसमुच्छलितकालकूटालोकनपलायितसुरासुरेश्वरविलपितकोलाहलसदृशः कलकलः श्रूयते स्कन्धावारस्य । २ नाथ ! नाथ ! रक्ष ! रक्ष ! एते कवलनोत्कण्ठितयमकिङ्करा इव प्रहरणपूरकरालकरा इहैव धावन्ति केऽपि सुभटाः । ३ क एषोऽपूर्वोत्पात इव मम शिबिरमध्ये । ४ कुत्र रे कुत्र स निजभुजयुगलबलगलहस्तितकीनाशसारो मीलच्छ्रीकारः । ५ अरे ! वीरधवलः प्रलग्नः शरधनुर्धोरणी ···· एषः । ६ नूनं नास्ति कुत्रापि अस्माकं । नाथः अन्यथा कथमेतादृशैरपि विधुरविधुरैः कोलाहलैरस्माकं रक्षणाय न धावति ।

मील०—( सत्रासाभिप्रायावहित्थं प्रधानं प्रति ) चॅल चल सुत्थीकलेमि नियकलवालचालाकवलितलिउलायपनमंडलो निचसिन्नं ।

पुनर्नेपथ्ये

अरेरे! । क्षिप्तो येनाङ्घ्रिरग्नौ ज्वलति फणिमुखे चिक्षिपे येन जिह्वा
येनोदत्थापि सुप्तो हरिरजनि पुरो येन कालस्य कोपः ।
मीलच्छ्रीकारको मज्जनपदविपदुचण्डदोर्दण्डदीप्तः
क्वासौ क्वासौ तमन्विष्यति मदसिरसौ रक्तपानोत्सवोत्कः॥५॥

मील०—( पुरोऽवलोक्य सभयातिरेकम् ) अँले कोवकविशलोयणो पधनोधितवेसो एसो वीरधवलो इधज्जेव आकच्छदि ।

इति क्षितितलल्गितालगिततलाङ्गुलिचरणं पुरःप्रणश्यता प्रधानेन सह पलायते ।

ततः प्रविशति समरोचितरूपधारिणा द्वारभट्टेन प्रस्तूयमानः "क्षिप्तो येनाङ्घ्रिरग्नौ" इति तारस्वरं पठन् यथोचितपरिवारस्तुरगारूढः श्रीवीरधवलदेवः ।

वीरधवलः—रे रे तुरष्काः! क्व स भवतामधिपतिः? ।

स्त्रैणभ्रूणद्विजसुरगृहभ्रंशभूतैः प्रभूतैः
पापैस्तापं निदधदधिकं दुर्गतौ गन्तुकामः ।
प्रायश्चित्तं रचयति न किं सैष मत्खड्गधारा-
तीर्थस्नानैस्त्रिदशसुदृशां कार्मणैराद्वितीयैः ॥ ६ ॥

द्वारभट्टः—देव! देव! कुपितवैकुण्ठकण्ठीरवकठोरपौरुष! कथमिवाऽस्मिन्नियत्यपि तवायमियान् संरम्भः ।

नखच्छेद्ये विद्योतयसि परशुं किं तृणलवे
क्रमक्रीडालङ्घ्ये प्रगुणयसि पोतं च पयसि ।
स्वनासीरस्मेरोद्भटकटकसाध्येऽपि मलिने
यदस्मिन्साटोपं प्रकटयसि कोपं स्वयमपि ॥ ७ ॥

( सोच्चैर्हासं च ) अहो! महीयान् भाग्यपरिभोगोदयस्तस्य म्लेच्छराजस्य । यदेनमपि,

कुप्यत्कृतान्तमदखण्डनचण्डिमाऽपि
कोऽप्येष कोपरभसस्तव शौर्यशौण्ड! ।

---

१ चल चल स्वस्थीकरोमि निजकरवालज्वालाकवलितरिपुराजवनमण्डलो निजसैन्यम् ।
२ अरे! कोपकपिशलोचनः प्रधनोचितवेष एष वीरधवल इहैवागच्छति ।

विश्वत्रयीसुभटविक्रमसङ्कथासु
सद्यो महान्तमनयन्महिमानमद्य ॥ ८ ॥

( अरित्रासत्वरातिरेकं विभाव्य )

धात्रा सैनिकसञ्चयः खलु भवद्भाग्यानुरूपश्रियं
ध्यात्वान्तर्मनसैव ये विदधिरे तेषां गतिं किं स्तुमः ।
तेभ्योऽपि त्रसनत्वरागतिभरादायुः स्थिरं निर्मितं
येषां ते जवमञ्जुलेन तु कृता द्रव्येण केन द्विषः ॥ ९ ॥

किञ्च—

अरयस्त्वरया जग्मुरस्माकं पश्यतामपि ।
इति व्रीडाभरेणेव न्यङ्मुखास्तव वाजिनः ॥ १० ॥

भृशमद्भुतानामपि परपरिभवपरिरम्भो विडम्बनडम्बराय जायेत ।
तथाहि—

गतिजित इव पुच्छोच्छालनच्छद्मनैव
स्वयमनुचरभावं प्राप येषां समीरः ।
त्रसदहितगतिश्रीतर्जितास्तेप्यकीर्त्ति
विदधति धुतधूलीकैतवात्त्वत्तुरङ्गाः ॥ ११ ॥

(सोत्प्रासहासम्) आत्मीयरूपसमदा इव येऽङ्घ्रिधूत-
धूलीभयादतितरां त्वरिताः स्फुरन्ति ।
क्षिप्त्वा रजो निजपदाहतमेव तेषां
त्वद्वाजिनामपि मुखे रिपवस्त्रसन्ति ॥ १२ ॥

( सावेशं च ) देव ! देव ! परिहर त्वं समरसमारम्भसरम्भममुम् । यतः-

क्रुद्धः सैष परेषु वीरधवलः सूरेषु साक्षादिति
त्रासेनेव हृतप्रतापमहिमा सङ्कोच्य दूरं करान् ।
अर्कोऽपि स्वमगोपयद्दिवि रजःपूरेण कोऽन्यः पुरः
स्थातास्ति त्वयि विष्टपैकमुकुटे दिग्जैत्रयात्राकृति ॥ १३ ॥

( सप्रभावातिशयम् )

म्लेच्छः स्फूर्जति नैव वीरधवलक्ष्मापालखड्गक्षतो
मामित्याप पतिस्त्विषां हृदि मुदं शत्राविह त्रासिनि ।

एतत्पादरजःप्रसङ्गजनितं तस्याहरिष्यत्पुनः
कः शोकं यदि मा भविष्यदभितस्त्वत्कीर्तिमन्दाकिनी ॥ १४ ॥

वीरधवलः—कथं हस्ततः अस्त एव चिरकालोपस्थितोऽपि समरसमारम्भोऽयमस्मद्भुजस्तम्भयोरभाग्यरहस्येन ।

( सनिर्वेदं च )

एतस्मिन्सुचिरोपवासविपुलः क्षुत्पारणार्थं समा-
कृष्टप्रौढनरासिचन्द्ररसनाभीमे भृशं मद्भुजे ।
धिग्वातः किसु ढौकितोऽद्य कवलः पूर्वं त्वयाऽसौ हृत-
श्चेत्पश्चादपि कस्तवाप्ययमुपालम्भोऽथ कर्मेदृशम् ॥ १५ ॥

द्वारभट्टः—देव! परिहरावेशमुत्तरङ्गम्। गतोयमतिदूरमलीकसुरताभिनिवेशस्त्वद्भयभङ्गुरस्वेच्छागतिः म्लेच्छाधिपतिः ।

वीरधवलः—( तथा विधाय भट्टं प्रति ) त्वमप्यत्रैव निवेशय शिबिरं, प्रवेशय च सचिवमरालं श्रीतेजःपालम्।

भट्टः—यदादिशति देवः। ( इति निष्क्रान्तः )

( ततः प्रविशति तेजःपालः )

तेजःपालः—(सहर्षप्रकर्षोत्कटम्) कटरि! पौरुषोत्कटता श्रीवीरधवलदेवस्य।

श्रीलावण्यप्रसादाङ्गजशिबिरचरा दीप्रकुन्तप्रदीपा
यावद्धावन्ति शत्रुं तमसि रणरजोजन्मनि द्रष्टुमेनम् ।
तावद्दावाग्निदोषाकरतरणिशतैरप्यभेद्यं समन्ता-
दुष्कीर्तिध्वान्तमन्तः कृततरलगतिः प्राविशत्सैष दक्षः ॥१६॥

( किञ्चिदुपसृत्य राजानं प्रणमति )

वीरधवलः—सखे ! सखेदा इव वयमस्मिन्नसुहृदि प्राणग्राहमपि प्रणश्य प्रयाते । अथवा—

दीपे दीप्रे गृहकुहरतो बाह्यमेत्यन्धकारः
स्फातिं धत्तां प्रसरतु पुनः कुत्र दीप्ते दिनेशे ।
मत्खड्गेऽस्मिंल्लसति समितः स प्रणश्य प्रयातु
क्वासौ गन्ता पुनरुपचिते वस्तुपालप्रपञ्चे ॥ १७ ॥

तेजःपालः—देव दिव्यशक्तिसम्पृक्तभुजादण्ड ! ।

उत्कर्षाय प्रभवति भुवः पौरुषाम्भोधिरन्त-

र्मग्नक्ष्माभृत्ततिरतितरामुत्तरङ्गस्तवैव ।

वीरधवलः—( सस्मितम् ) भृशमीदृशमेवैतत् ।

रङ्गद्गङ्गालहरिरुचिरैर्वस्तुपालाननेन्दु—

ज्योत्स्नाजालैरुपचितरुचिः सैष शिक्षाविशेषैः ॥ १८ ॥

तेजःपालः—सत्यमेवेदम् ।

स्वामिन्नुग्रप्रतापस्तव सचिवपतेर्वस्तुपालस्य बुद्धि-

गौरी प्रेमातिरेकादजनि तदनयोरर्द्धनारीश्वरत्वम् ।

तेनैकामेव कान्तौ निदधतुरपृथग्यत्नजाग्रत्प्रयोग-

प्रागल्भ्यैकप्रभावौ सुरसरिदुपमामुच्चकैः कीर्त्तिमेतौ ॥ १९ ॥

वीरधवलः—किं वच्मि सचिवपतिमतिचरितम् ।

युद्धे व्योमालवाले जलरुधि रुधिरैः खड्गकृत्तारिगर्भा-

कृष्टान्तःस्त्वशोचिःकणजनितजनिर्यत्प्रतापैकशाखी ।

सद्यः प्राप्नोति वृद्धिं वियति कुसुमतां नेतुमेतं द्युतीनां

नाथं कालाग्निरुद्रं भुजगजगति च स्फारमूलानुकारम् ॥ २० ॥

सोऽपि सम्प्रति प्रतिभटघटाविघटनपटुना अस्य मन्त्रीन्दोर्मन्त्राटोपेन भृशमभिहतारम्भो मदवलोकनादेव तथा पलायितवान् हम्मीरवीरः, यथा—

धिग् धिग् मुक्तपराक्रमस्य समितौ पृष्ठे लगत्यस्य यः

स्विन्नाङ्गस्य कलङ्कपङ्कपदवीमायाति सोऽपि ध्रुवम् ।

मत्त्वेतीव समीरजित्वरगतेरस्याधुना त्रस्यतो

रेणुः स्वक्रमसम्भवोऽपि न भृशं पृष्ठं परिस्पृष्टवान् ॥ २१ ॥

( नेपथ्ये )

द्रष्टुं त्वत्सैनिकावासमिव व्योमाग्रसङ्गतः ।

क्षणं स्थिरगतिः शर्मकर्म साक्षीकरोतु ते ॥ २२ ॥

त्वद्वाहव्यूहवीङ्खाधुतधरणिरजश्चक्रवालैः समन्ता-

दुद्यद्भिः पूर्वमस्तद्युतिरजनि जगल्लोचनं चण्डरोचिः ।

धौतस्त्वत्कीर्त्तिदुग्धैरिव पुनरधुना सैष नैर्मल्यशाली
श्रीलावण्यप्रसादोद्भव ! तव सुखदो लब्धमध्याह्नसन्ध्यः ॥२३॥

तेजःपालः—अहो! वचनचातुर्यं वैतालिकस्य। यत्सैन्यनिवेशादेव पौरुषावेशमध्याह्नसन्ध्योपदेशमयीभिस्तिसृभिर्भङ्गिभिस्तरङ्गितमेकमेव वचनं कर्णावतंसयत्यस्माकम्।

वीरधवलः—सखे सचिवशेखर! मध्याह्नसन्ध्येति स्वयमागतानागतजनज्ञानपरायणो भव। वयमपि क्षत्रकुलोचितं सान्ध्यं कर्म कुर्महे।

( इति निष्क्रान्ताः सर्वे )

चतुर्थोऽङ्कः



# पञ्चमोऽङ्कः

( ततः प्रविशति कञ्चुकी )

कञ्चुकी—( जराजर्जराणि कतिचित्पदानि प्रदाय सनिर्वेदम् )

सोऽहं यष्टिगतिस्त्रिविक्रम इति ख्यातः श्रृणोति श्रुति-
स्तारं वक्तरि भाषुकेऽर्पितमुखे नामेव दातुं शिशोः ।
अङ्गुष्ठाङ्गुलिभिन्नपक्ष्मपुटके किञ्चिद्दृशौ पश्यतः
सर्वं जीर्णमिदं स्पृहैव तरुणी नाद्यापि मां मुञ्चति ॥ १ ॥

अपि च—सर्वाङ्गं पलितच्छलेन जरया मुक्ताः कटाक्षच्छटाः
स्वात्मा कम्पयते शिरश्च विषयाभोगान्निषेधन्निव ।
आलोकाय मुहुर्जलं वितरतो बाष्पच्छलाच्चक्षुषी
देहोऽद्यापि तथापि सङ्कुचति मे मृत्योर्भियेवाधिकम् ॥२॥

( सविमर्शम् ) कथमधुना दयितजयलक्ष्मीदोलायमानमनसमानन्दयिष्ये देवीं श्रीजयतल्लदेवीम् । चिरविरहखिन्नाया हि देव्याः,

घटिका प्रहरायते पुनः प्रहरोऽस्या दिवसायतेऽधुना ।
दिवसस्तु युगायते दधद्विधुमन्ते तपनोत्करोत्कटम् ॥ ३ ॥
तदेतन्मनोविनोदनाय किमुचितं स्यात् ।

( आकाशे )

(कराकृष्टशष्कुलीविकस्वरविवरास्खलितपतद्वर्णं कर्णं दत्वा) किमात्थ भोः? । "समीकसमयस्फुरदनीकभयपलायितहम्मीरप्रमोदपुलकितशरीरः श्रीवीरधवलदेवो देवीवदनारविन्दद्युतिमकरन्दपानोत्सवोत्सुकविलोचनरोलम्बयुगलो धवलकं प्रति प्रयाणकं कृतवान्" इति । तदहमप्यनयैव प्रवृत्त्या प्रवर्त्तयामि देवीम् ।
( इत्यौत्सुक्यत्वरितजरास्खलितपदं किञ्चिदुत्सर्पति )

( ततः प्रविशति नरविमानाधिरूढः श्रीवीरधवलदेवस्तेजःपालश्च )

वीरधवलः—( पुरोऽवलोक्य तेजः पालं प्रति ) सखे! क एष नभोमण्डलमण्डपावष्टम्भमूलस्तम्भायमानो गिरिः ? ।

तेजःपालः—देव !

धरित्रीधम्मिल्लो विलसति वसिष्ठक्रतुशत-
स्फुरद्धूमः श्यामीकृतवपुरसावर्बुदगिरिः ।

इमे ताराभारास्त्वदहितयशःषड्गदजुषो
यदङ्गं रङ्गन्तः कुसुमभरभङ्गीमबिभरुः ॥ ३ ॥

वीरधवलः—अहो कियत्सौभाग्यतुङ्गतालङ्कृतोऽयं गिरिः । तथाहि—
उत्सङ्गे विनिविष्ट एव फणभृत्पुर्या भुजङ्गव्रज-
व्याजस्फूर्जदतुच्छकज्जलमिलद्बाष्पाम्बुपूरस्पृशः ।
चुम्बत्येष दिवं परिस्फुरदुडुस्वेदद्रवार्द्रां मुदा
कान्तारप्रकराङ्कुरच्छलचरद्रोमाश्रयाऽऽलिङ्गितः ॥ ४ ॥

तेजःपालः—
एतदिह महताऽमुनैव मन्ये गगनमधारितरां धराधरेण ।
जलनिधिजलकैतवादिदं तु च्युतमवलक्षमलक्ष्यतैव दिक्षु ॥ ५ ॥

वीरधवलः—अमुमेव मौलिविभूषणतया विभूषयति भगवानचलेश्वरः।
यच्चूलाभाजि चन्द्रे विजयिनि विगलच्चन्द्रकान्तद्रवौघै-
रस्मिन् धत्ते पतङ्गोपलपटलशिखी न प्रतापं दिवापि ।
शङ्के पङ्केरुहाणि श्रियमतिशयिनीं न श्रयन्ति श्रवन्ती-
सन्तानेषु प्रतानं कुमुदसमुदयो न क्वचिन्मुञ्चते च ॥ ६ ॥

( सचमत्कारं च )

ते मेरुप्रमुखाः क्षयक्षणसमुद्भ्राम्यन्मरुड्डम्बरै-
रुड्डीना दिवि कर्करोत्करतुलां भूमीभृतो बिभ्रति ।
शैलोऽयं परिकम्पतेऽपि न पुनस्तां सप्तपातालिकां
भित्त्वोच्चैरचलेश्वरेण चलता संरम्भतः स्तम्भितः ॥ ७ ॥

तेजःपालः—देव काश्यपीकामुक ! पश्य पश्य पर्वतस्योपत्यकापरिसरेषु कृतप्रतिष्ठो वसिष्ठाश्रमोऽयं न कस्य विश्रमयति नयनानि । इह हि—
तृणकवलनलीलायातसारङ्गकान्ताविरहविधुरमुद्यत्क्रन्दनं बालमेणम् ।
अपि मृगरिपुपत्नी दूरितातङ्कमङ्के कलयति करुणार्द्रा दुग्धपानोत्सवाय ॥८॥
अहो ! महामुनिमाहात्म्यवशंवदा इव,
कुसुमसमुदयान्ततान्तभृङ्गीकलकलक्लृप्तमिथःकथाविनोदाः ।
अनुवनमपवैरमत्र वासं दधतितमामृतवोऽपि तुल्यकालम् ॥ ९ ॥

( सप्रमोदानुरागम् ) अहह महर्षिसंहर्षादिव,

काश्यंस्पष्टशिराभरोपमलतासंवेष्टिताङ्गा जटा-
जूटप्रायदलप्रतानमुकुटाः सौख्योपविष्टा ध्रुवम् ।
उत्फुल्लानि तपोधना इव वनोत्सङ्गे भृशं बिभ्रते
शुभ्रध्यानविभानिभानि शिरसा पुष्पाण्यमी पादपाः ॥ १० ॥

वीरधवलः—मन्त्रिमाणिक्य ! पवित्रय नेत्रमितोऽप्यत्र तपोधनेषु । अमी हि नियमनिरुद्धश्वासनिष्कम्पवपुषः पद्मासनोपविष्टा एव संसारसागरं तरन्त इव न कस्य चमत्कारयन्ति चेतांसि ।

तन्मालिन्यं दधति विषयग्रामपङ्कप्रपञ्चैः
पञ्चाप्यन्तःकरणकुहरे स्थापयित्वेन्द्रियाणि ।
एते नित्यं मुनिपरिवृढाः क्षालयन्ति क्षणेन
ध्यानाधानस्फुरितपरमानन्दपीयूषपूरैः ॥ ११ ॥

किञ्च— अनाहतरवोत्तरं परमसौरभं भास्वर—
प्रभापरिमलं सुखामृतमयं महाशैत्यवत् ।
ग्रहीतुमिव दुर्लभं प्रशमिनां परं ब्रह्म तत्
विशन्ति करणान्यहो हृदि समाधिदीपस्मिते ॥ १२ ॥

तेजःपालः—( सहर्षानुरागम् ) देव ! निस्तन्द्ररौद्ररसव्यसनविवशानामपि मनांसि शमयत्ययं पवित्रो महामुनिचरित्रोत्सवः । तथाहि—

एता भान्त्यनुरक्तमुक्तिवनिताचञ्चत्कटाक्षच्छटा-
क्षेपाः कीर्त्तिलताङ्कुराः शमरसक्षीराब्धिनीरोर्मयः ।
सद्धर्मध्वजिनीनवध्वजपटाः कर्पूरपूरश्रियः
शुद्धध्यानवशव्रतीन्द्रदशमद्वारोद्गता दीप्तयः ॥ १३ ॥

किञ्च—

वृक्षत्वग्वसनं फलालिरशनं सारङ्गचर्मासनं
तल्पो भूतलमङ्गभूषणमहो भस्मैव वेश्माटवी ।
इत्येते सुकृतानि कष्टकलया क्रीणन्ति धन्याः सुखी
स्वामिन् ! धन्यतमोऽस्त्यमून्पुनरवन्पुण्यांशभागी भवान् ॥ १४ ॥

वीरधवलः—( पुरोऽवलोक्य ) केयं पुनरुक्तितपुरंदरपुरा पुरी परितः परितोषयति जननयनानि ।

तेजःपालः—देव! भविष्यत्पद्मभूवैभवेन जगन्निर्माणकर्मण्यात्मपरीक्षानिष्ठेनेव भगवता वशिष्ठेन विरचितस्य विक्रमातिक्रान्तसुरासुरचक्रस्य परमारवीरस्य वंशोद्भवानामवनिधवानामेकमहिषी महोन्नतचैत्यचूलाचलध्वजाञ्चलचुम्बितचन्द्रा चन्द्रावती नाम नगरी।

या निर्मलाम्बुस्पृशि दीर्घिकायां नभःस्रवन्त्यामपि जातबिम्बा।
कृतप्रयाणेव समं रराज भुजङ्गमस्वर्गिपुरीजयाय ॥ १५ ॥

अपि च—

नानारत्नकलापकल्पितमहाप्रासादवृन्दोदित-
ज्योतिश्चित्रितचञ्चलध्वजपटप्राग्भारदम्भच्छदैः।
आहर्त्ता कलिकालकालफणिनं न्यायैककेकी सदा
यस्यां जातघनोदयप्रसृमरानन्दो नरीनृत्यते ॥ १६ ॥

वीरधवलः—परमारवीरभुजापरिघपरिपालिता परपरिभवानामभूमिर्भृशमसौ विराजति राजधानी।

तथाहि—

उन्मीलत्कीर्त्तिदुग्धार्णवनवपरिखाभूषितान्तं प्रताप-
ज्वालाजिह्वोग्रिताग्रं लसदसममहाशस्त्रसम्पातरौद्रम्।
प्राकारत्वं प्रमारान्वयनृपतिभुजायुग्ममुच्चैः प्रतेने
यस्याः प्रत्यर्थिपृथ्वीपरिवृढपृतनासङ्गदुर्लङ्घमेव ॥ १७ ॥

( नरविमानातिवेगनाटितकेन )

( पुरोऽवलोक्य ) अये प्राप्तैव भगवती सरस्वती नाम महानदी।

पुनाति स्नानेन त्रिदशतटिनी दर्शनवशा-
त्पुनर्देवी रेवा विरचयति पावित्र्यमतुलम्।
इयं दूरे नामश्रुतिभिरपि दत्ते च शुचितां
सुता धातुः पूतं त्रिजगदपि भूतं तदनया ॥ १८ ॥

तेजःपालः—देव! सुरासुरमहिता त्रिभुवनहितायैव धावत्यसौ। यतः-

त्रैलोक्योपकृतिक्रमेण जनताद्रोहप्ररोहन्महः-
सन्दोहः सहसाऽनया जलनिधौ क्षिप्तः शिखी वाडवः।
तत्तापोपशमेच्छया हृदि धृतं सम्भारमम्भोरुहा-
मेषा नैव कदापि दापितमधुस्यन्दोच्चयं मुञ्चति ॥ १९ ॥

अपि च—मयि सत्यामपि भुवने नरका इति कथमियं कथाऽद्यापि ।
निर्मूलयितुमिवैतानित्येषा प्रविशति भुवोऽन्तः ॥ २० ॥

वीरधवलः—( सहर्षोल्लासम् ) नूनमस्याः सिद्धपुरपुरपरिसरे प्राचीमुखप्रसृमरं पयःप्रवाहमधिवसन् सुचिरविरञ्चिशिरःकर्त्तनसञ्जातपातकविशुद्ध्यर्थमिव भगवान् भद्रमहाकालः,

चूलागलद्धवलसिन्धुपयःप्रवाहो व्यालोलचामरतुलां तनुते त्रिसन्ध्यम् ।
नृत्यन्नसौ प्रसृमरानलचक्षुरस्या नीराजनीभवति च स्वयमेव देवः ॥२१॥

अये! स्वर्गसीम्नि सुकृतानामनायव्ययेन दूयमानैरगण्यपुण्यार्जननैपुण्यार्थिभिरमरैरमरावतीवेयमस्यास्त्रिभुवनपावित्र्यपरायणायास्तीरेऽधिरोपिता पितामहसर्गावधिरधिरोहति नयनपदवीमदवीयसी गूर्जरराजभुजपालिता राजधानी ।

उच्चैश्चैत्याग्रभागैः स्खलितमिह महत्त्वद्रथाङ्गस्य भावि
स्थाने स्थाने तदस्मान्निभृतमित इतो गम्यतां दूरदूरम् ।
इत्यस्यां भूरिभासो दिनकरसुहृदः शातकुम्भीयकुम्भा
मित्रं शश्वत्पताकापटकपटकरक्रीडया ज्ञापयन्ति ॥ २२ ॥

तेजःपालः—देव ! पश्य पश्यामी ।

किं मच्छृङ्गारशृङ्गावलिविभवभरोऽहारि हारीभवद्भिः
साक्षादस्यामितीवावनिधरविभुना वेष्टिता वप्रवेषात् ।
तीव्रांशुं तप्तलोहोपममरगृहा व्योमगङ्गाम्बुरङ्गन्मौलिस्नाताः पताकावसनरसनया लेलिहन्तो नु शुद्धाः॥ २३॥

वीरधवलः—( सस्मितम् )

निशि निशि तुहिनांशुज्योत्स्नया जातजाड्या-
कृतिरिव रविमूर्त्योमुल्लसन्त्यां हसन्त्याम् ।
इह सुरगृहपङ्क्तिर्वासरे वासरेऽसौ
बत तपति पताकाहस्तविस्तारणेन ॥ २४ ॥

एतां पुनरनन्तश्रीमण्डनीयां मण्डयत्येककुण्डलमिव सहस्रसङ्ख्यशशिशेखरसुरगृहकच्छलमुक्ताफलपटलजटिलान्तं मध्यस्फुरदुरुतरतरुलतावितानवलयितान्तरीपमयमरकतमणिनिकुरंबकान्तं नितान्ततान्तनीरजरजःपरिरम्भ-

सम्भावितशातकुम्भशोभमम्भो विश्राणं जगदानन्दनिधानं सिद्धसागराभिधानं सरः ।

महाम्भोधिर्गम्भीरिमगरिममाधुर्यविभवै-
र्जितो येन श्यामोऽजनि जनितदुःखव्यतिकरः ।
वहत्यौर्वव्याजादुरसि परितापं न घटते
सरस्वत्याप्येतद्विरचितपरीरम्भपरया ॥ २५ ॥

सदा पूर्णेऽभ्यर्णस्थितहरसहस्रालिकशशि-
प्रभाचश्चच्चन्द्रोपलपटलसोपानसलिलैः ।
क्व सम्भाव्यो यत्र प्रलयसमयद्वादशरवि-
च्छविप्लोषैः शोषः क्वथितपृथुपाथोधिभिरपि ॥ २६ ॥

तेजपालः—देव ! एवमेवैतत् ।

यत्रौर्वप्रकराः स्फुरन्ति गिरिशप्रासादकुम्भप्रति-
च्छन्दैः कुम्भचयाः पिबन्ति च सदा नाभूत्तथाप्यूनता ।
एकौर्वज्वलनैककुम्भतनयक्रीडानिपीतोदक-
व्रीडार्त्तः पुरतः क्व तस्य सरसः क्षीरार्णवो वर्ण्यताम् ॥ २७ ॥

( पूजितनमस्कृतसमुत्तीर्णायां सरस्वत्यां नरविमानवेगं विभाव्य )

देव ! देव ! पश्य—

ये दूरक्षितिमण्डलस्थितिजुषो दृष्टा निविष्टा इव
त्वां सद्योनु विमानवेगरभसायातं निरूप्यैव ते ।
अभ्युत्थानमिव क्षणात् क्षितिरुहः कुर्वन्ति ते सर्वतः
स्मेरत्पुष्पततिस्मितद्युतिभृतो विस्तीर्णशाखाभुजाः ॥ २८ ॥

वीरधवलः—( अङ्गुल्या दर्शयन् ) नयनमार्गमियमायातैव महीमहेलाकर्णावतंसकुसुमं कर्णावती नाम नगरी । यस्यामनवरतमपि,

तटस्फुटत्साभ्रमतीतरङ्गरङ्गन्मृदङ्गध्वनितेन लक्ष्मीः ।
अस्मत्पितुः श्रीलवणप्रसाददेवस्य नर्नर्त्ति कराब्जरङ्गे ॥ २९ ॥

तेजःपालः—देव महीमण्डलमण्डन ! किमुच्यतेऽस्याश्चारुत्वम् ।

एका साभ्रमती सरिल्लहरिषु स्वैरं द्वितीया वियत्—
कुल्यावीचिषु रोचमानरजतादर्शोज्ज्वलासु ध्रुवम् ।

तन्वाते निबिडं तपः फणिपुरीगीर्वाणपुर्यौ सदा
न्यञ्चुख्यौ परिलम्बिबिम्बमिषतो यस्या ग्रहीतुं श्रियम् ॥ ३० ॥

वीरधवलः—अहो ! त्वरातिरेको नरविमानस्य ।

गृह्णाति दूरस्थितमेव वस्तु विलोचनं यावदिदं पुरो मे ।
दूरेण पश्चात्पतितं निमेषात्तत्तावदाप्नोति वलन्मुखस्य ॥ ३१ ॥

तेजःपालः—देव ! प्रथमप्रसृत्वरहृदयानन्दगुणबलाकृष्टमिव पुरः पपात नयनवर्त्मनि धवलक्ककं नाम नगरम् ।

वीरधवलः—( पुरोऽवलोक्य ) धवलकपुरलक्ष्मीलीलाधम्मिल्ल इव लक्ष्यते देव्या जयतलदेव्या विलासोद्याननिवेशः ।

अस्योपरि स्फुरति वायुहतप्रसून-
व्यूहोद्भवा गगनसीम्नि परागराजिः ।
अन्तःप्रवेष्टुमसहा मिहिरस्य दीप्ति-
श्छायाच्छिदे प्रकुपितेव विकम्पमाना ॥ ३२ ॥

तेजःपालः—अहो ! अहितेन विहितः प्रहतिप्रयोगोऽपि महतां हितायैव जायेत । तथाहि—

वेल्लद्वल्लिच्छदनविवरैश्छेत्तुमत्रातिदूरं
छायापूरं क्षिपति खलु यां कर्कशां कान्तिमर्कः ।
साप्येतस्य भ्रमरनिकरश्यामधाम्नः पिशङ्गी
रङ्गत्यङ्गेऽरुणमणिमयाकल्पसन्दोहकल्पा ॥ ३३ ॥

वीरधवलः—नूनमिदानीमिहैवात्मानं रमयमाणाऽस्ति देवी । तथाहि—

भान्ति तद्वदनचन्द्रचन्द्रिकाचन्द्रकाः कुसुमगुच्छकच्छलात् ।
शाखिमौलिषु चलद्दलावलीमध्यलब्धनिगमा इवोद्गताः ॥ ३४ ॥

तेजःपालः—देव ! धवलकपुरप्रवेशमुहूर्त्तमहोत्सवं यावदिहैवोद्यानलेखासु खेलनीयं देवेन । पुनरहं पुरि पुरो गत्वा कारयामि प्रवेशोत्सवप्रगुणताम् ।

( इति तुरङ्गमं समारुह्य निष्क्रान्तः )

वीरधवलः—( नरविमानादुत्तीर्य परिजनं प्रति ) क्वासौ अस्माकं प्रियवयस्यः ।

( ततः प्रविशाति विदूषकः )

विदूषकः—(उपसृत्य) देवँ ! मह बालबंभणीसिरकलियपलियकलावुज्ज-लजसपसरविहूसियतिहुयण ! नियघरघरिणीचरणनहसिहासिहिविहियनिच्च-अग्गिहुत्ताणं अम्हाणं बंभणाणं वयणेहिं सव्वहा सुही होहि ।

वीरधवलः—( सहासम् ) वयस्य ! क्व स्थितो भवानियन्तं समयम् ।

विदूषकः—देवँ ! नियमंतिपरप्परकहावसणपडिएसु तुम्हेसु नियवा-हणपुट्ठि अद्धंगठावियनियघरिणीसिहिणदक्खाहलपत्तंकुरकरणपरमत्थलग्गो समंज्जेव अणुवडिओ ।

वीरधवलः—अहो ! महीयानयं अस्मद्व्यसनोपचयचकितस्य भवतः परमार्थप्रकर्षः । (इत्यमुनैव सह उद्यानप्रवेशं नाटयति )

विदूषकः—( पुरो निरूप्य सेर्ष्यम् )

पँयडियफुल्लकरंबा मह खुहियमुहस्स सम्मुहं अहुणा ।
वाअंदोलियसाहंगुट्ठं नच्चावयंति लया ॥ ३५ ॥

(विलोक्य) नाह ! पिक्ख ! पिक्ख ! हठायड्ढियं सहस्सनयणस्स नयणसहस्सं प-रिपुंजियं सीसे वहंती कावि कुट्टिणी भयाउली भआतुरिएहिं पएहिं एयस्स लयाजालस्स मज्झम्मि परावट्टइ ।

वीरधवलः—( विलोक्य ) नूनमत्रैव लतावितानकान्तारे अद्धिरहविह-लीभूताऽस्ति देवी जैत्रदेवी । यदियं हंसिका नाम तच्चरणपरिचारिका शिरसि कमलमण्डलं धारयन्ती त्वरितमितो व्रजति । ( विदूषकं प्रति ) धिग् धिग् रे मूढ ! गौर्या गौरत्वं पाण्डुरोगपदे पतितम् ।

---

१ देव ! मम बालब्राह्मणीशिरःकलितपलितकलापोज्ज्वलयशःप्रसरविभूषितत्रिभुवन ! निजगृह-गृहिणीचरणनखशिखाशिखिविहितनित्याग्निहोत्राणामस्माकं ब्राह्मणानां वचनैः सर्वथा सुखीभव । २ देव ! निजमन्त्रिपरस्परकथाव्यसनपतितेषु युष्मासु निजवाहनपृष्ठे अर्धाङ्गस्थापितनिजगृहिणी-स्तनद्राक्षाफलपत्राङ्कुरकरणपरमार्थलग्नः सममेव अनुपतितः ।

३ प्रकटितफुल्लकरम्बा मम क्षुधितमुखस्य सम्मुखमधुना ।
वातान्दोलितशाखाङ्गुष्ठं नर्त्तयन्ति लताः ॥

नाथ ! प्रेक्षस्व ! प्रेक्षस्व ! हठाकृष्टं सहस्रनयनस्य नयनसहस्रं परिपुञ्जितं शीर्षे वहन्ती कापि कुट्टिनी भयाकुलीभूता त्वरितत्वरितैः पदैः एतस्य लताजालस्य मध्ये परावर्त्तते ।

**विदूषकः**—( सक्रोधम् ) ण्ण हु अहं तुह पासंमि ठाइस्सं । वट्टियतिलपिं-डपंडुरतुंडीए निअबंभणीए खुरसरसिजाइं सेविस्सं ।[1]

( इति अपसरति )

**वीरधवलः**—भो भो वयस्य ! कथमिव मयि क्रोधवान् ? ।

**विदूषकः**—महं पडिवेसिओ नवनवइवरिसओ महापंडिओ अज्जवि पढ-णस्स अणिविण्णो माइयापढमक्खरं सिक्खंतो आसि । ता कहं मं मुड्ढं कहिसित्ति ।[2]

**वीरधवलः**—वयस्य ! देवीवदनारविन्दविलोकनविसंष्ठुलस्य ममेदम-विचारतः पतितं वचसि स्खलितम् । बहुक्षमेण क्षम्यतां भवता । तदिदानी-मेह्येहि लतान्तरित एव पश्यामि तावदात्मनः प्राणेश्वरीम् ।

( इति उपसृत्य लतागुल्मगुप्तवपुर्निखिलसखीमतिप्रतिक्रियमाणविरहरहस्यवेदिनीं प्रेमाङ्कुर-मेदिनीं देवीं विलोकयति )

**देवी**—( सखीं प्रति ) ण्ण हु एस संतावो हिययम्मि नलिणसंठवणेण नि-इवीयदि ।[3]

जं पीयूसमयूहफरसेण वि होइ विरसियप्पसरं ।
तं कह विरहहुयासणविणासणं फुरउ सहि कमलं ॥ ३६ ॥

**विदूषकः**—अरे रासहरायसरिसगमणाओ ! कहं देवीतावोवसमणम्मि सयलसलिलायरनलिणुम्मूलणेण अप्पा किलामीयदि ।[4]

लच्छीविलासभवणं हिययम्मि झडित्ति कुणह देवीए ।
एयं सुपाणिनलिणं एगं चिय वीरधवलस्स ॥ ३७ ॥[5]

( इति सर्वा अपि ससम्भ्रममूर्ध्वमवलोक्य )

---

१ न खलु अहं तव पार्श्वे स्थास्यामि । वर्तिततिलपिण्डपाण्डुरतुण्ड्या निजब्राह्मण्याः खुरसर-सिजानि सेविष्ये । २ मम प्रातिवेशिकः नवनवतिवर्षवयाः महापण्डितः अद्यापि पठनस्यानिर्विण्णः मातृकाप्रथमाक्षरं शिक्षन्नासीत् । तत्कथं मां मूढं कथयसीति । ३ न खलु एष सन्तापो हृदये नलिनसंस्थापनेन निष्ठाप्यते ।

यत्पीयूषमयूखस्पर्शेनापि भवति विरसितप्रसरम् ।
तत्कथं विरहहुताशनविनाशनं स्फुरतु सखि कमलम् ॥

४ अरे रासभराजसदृशगमनाः ! कथं देवीतापोपशमने सकलसलिलाकरनलिनोन्मूलनेन आत्मा क्लाम्यते ।

५ लक्ष्मीविलासभवने हृदये झटिति कुरुत देव्याः । एतत्सुपाणिनलिनमेकमेव वीरधवलस्य ॥

सख्यः—[1]देवि ! देवि ! पिक्ख ! पिक्ख ! तुह विवक्खभूयमयणं नियरूवेण निज्जिणंतो पत्तो कोवि कस्सवि पाणवल्लहो ।

( देवी दयितमुखमवलोक्य अविद्यावीरधवललिपिलक्ष्यविलोकसततविलक्षापि सखीवचनप्रत्यायितहृदया सत्वरमुत्तिष्ठन्ती प्रलयपरवशवपुरुपाविशति )

सख्यः—( सावहित्थस्मितम् ) [2]देवि ! देवि ! विरहहुयासणविहुरीकया उट्ठिदुं पि न समत्थीभूआसि ।

वीरधवलः—( सहर्षोल्लासम् )

व्याजेन नव्यपुलकस्फुटितस्य कार्श्य-
केयूरितस्य वलयप्रकरस्य देव्याः ।
देवः स्मरः शतमितानि शरासनानि
मां जेतुमुत्सुक इव प्रगुणीचकार ॥ ३८ ॥

( देवी सखीकरावलम्बनात्कथञ्चिदुत्थाय समुपसर्पति )

( देव्याः कार्श्यातिशयं विलोक्य ) नूनममौर्वीबन्धबन्धुरधन्वापि त्रिजगतीं विजित्य,

अधुना विजेतुकामो मामिव कामोऽयमुत्सुकः कामम् ।
अतिकृशतामनयदिमां मौर्वीमिव धनुषि निर्मातुम् ॥ ३९ ॥

( इत्युपसर्पति । देवी सत्रपातिरेकं विवालितग्रीवमास्ते )

( सखेदम् ) अतिकृशमिदमङ्गं वीक्ष्य मे मा विलक्षी-
भवतु हृदयनाथः प्रेममग्नान्तरात्मा ।
स्वमिति विपुलवेणीलीलया गोपयन्ती
मयि विवलितकण्ठी कम्बुकण्ठी बभूव ॥ ४० ॥

( इति त्वरिततरपदपातमग्रतो गत्वा सहर्षदैन्यम् )

वपुरपचितरोचिस्तावकं देवि ! तादृग्
रसयति रसि चक्षुर्नित्यमप्यान्तरं मे ।
कृशमपि चिरकालादेनयोर्वीक्षितुं तत्
सुमुखि ! नयनयोः किं छन्नमद्यापि भाग्यम् ॥ ४१ ॥

---

१ देवि ! देवि ! तव विपक्षभूतमदनं निजरूपेण निर्जयन् प्राप्तः कोऽपि कस्यापि प्राणवल्लभः ।
२ देवि ! देवि ! विरहहुताशनविधुरीकृता उत्थितुमपि न समर्थीभूतासि ।

किञ्च । ताद्दक्षे विरहेऽपि यस्य कथमप्यत्यक्तताद्दग्भवे
लीलालुससरोरुहद्युतिरसावद्यापि दासः शशी ।
देवि ! त्वद्वदनेन तेन नयनद्वन्द्वं ममैतद्धृतं
बन्दीकृत्य कुतो गमिष्यति कृशेष्वङ्गेषु शृङ्गारिणि ॥ ४२ ॥

हंसिका—देवे ! पिक्ख ! पिक्ख ! ।

देवीए तारिसघणविरहानलकरसिआइं अंगाइं ।
अहुणा तुह दंसणकयपुलकुग्गमपूरियाइं रेहंति ॥ ४३ ॥

अवि य ।

तुम्हंगसंगमरसुल्लसिएहिं नूणं पीणत्थणेहिं हढतोडिदसंधिबन्धं ।
नो कंचुयं मुयइ कंटगसेयलग्गं देवीइ पिक्ख हिअयं अइलज्जियं व ॥४४॥

( नेपथ्ये )

देव धवलकुलधुराधौरेयधवल ! त्वर्यतां त्वर्यताम् । प्रत्यासीदति पुरप्रवेशमुहूर्त्तः ।

वीरधवलः—(अनाकर्णितकेन )

आनन्दकन्दलनकेलिसुधारसेन देवि ! प्रसादविशदेन विलोचनेन ।
अङ्गं कृतार्थय मदीयमनङ्गशक्ते ! कर्णद्वयं सुललितेन च भाषणेन ॥४५॥

हंसिका—देव !

सुचिरागयम्मि दइए सुमुहीणं लज्जलुलियनयणाणं ।
हिययरसणग्गकयघणगयागयं भासियं हवइ ॥ ४६ ॥

( पुनर्नेपथ्ये )

देव कीर्त्तिकुमुदिनीकौमुदीकामुक । त्वद्वदनावलोकनकुतूहलोत्तरलनयनोऽयं वर्तते सकलोऽपि लोकः। मुहूर्तमात्रान्तरायः प्रवेशमुहूर्त्तोऽपि मूर्त्तो जनानन्द इव पर्यापतितः ।

---

१ देव ! प्रेक्षस्व ! प्रेक्षस्व ! । देव्यास्तादृशघनविरहानलकृशानि अङ्गानि ।
अधुना तव दर्शनकृतपुलकोद्गमपूरितानि रेहन्ति ॥
अपि च । तवाङ्गसङ्गमरसोल्लसितैः नूनं पीनस्तनैः हठत्रोटितसन्धिबन्धम् ।
नो कञ्चुकं मुञ्चति कण्टकस्वेदलग्नं देव्याः प्रेक्षस्व हृदयमतिलज्जितं च ॥
२ सुचिरागते दयिते सुमुखीनां लज्जाकुलितनयनानाम् ।
हृदयरसनाग्रकृतघनगतागतं भाषितं भवति ॥

वीरधवलः—( समाकर्ण्य देवीं प्रति ) अस्मदीयहृदयानन्दपरमाणुमयमूर्ते देवि ! सञ्चर्यताम् । प्रत्यासन्नो हि प्रवेशमहोत्सवः यदयं तेजःपालमुखेन श्रीवस्तुपालसचिवपतिर्मां त्वरयति । ( इति तुरङ्गमारुह्य सुखासनस्थितया देव्याऽनुगम्यमानः सकलपरिवारपरिवृतः सञ्चरति )

( ततः प्रविशतस्तुरगारूढौ महामात्यश्रीवस्तुपालतेजःपालौ )

तेजःपालः—आर्य ! सर्वकार्यप्रपञ्चेषु युष्मच्छिक्षया युष्मानिव श्रीमदुदयसिंहसाचिव्यरचितोदयमुदयनन्दनमुदयमानयशसं श्रीयशोवीरमेवापृच्छन् ,

भवदास्यसुधांशुवाक्सुधारसनेनेव तदीयशिक्षया ।
अहमन्वहमत्यजं मुहुः परितापं कटकक्रमोत्कटम् ॥ ४७ ॥

वस्तुपालः—वत्स ! साधु विहितं भवता ।

तातस्यैवाद्भुतमतिनिधेरश्वराजस्य शिक्षा
चेतोऽस्माकं सुरसरिदिव क्षालयामास शुद्धा ।
सूते मन्त्रे कथमपि तथाप्येकतो मल्लदेवा-
द्बन्धोर्ज्येष्ठादिव ननु यशोवीरतो विद्म कृत्यम् ॥ ४८ ॥

( पुरतो निरूप्य )

मिथःप्रेङ्खद्द्वेषिव्रजविजयतेजःशिखियशः-
सुधावीचीचञ्चद्वपुरिव पुरो वीरधवलः ।
चिरादप्रेक्षोद्यज्जडिमविधुरस्यापि विरहा-
तपव्यासस्याऽपि प्रमदमयमक्ष्णः प्रतनुते ॥ ४९ ॥

( इत्युपसृत्य प्रणमनाय तुरगादुत्तरन्हयवेगनाटितकेन वीरधवलेन भुजाभ्यामालिङ्ग्यमानः सप्रमोदातिरेकम् )

देव ! देव !

अङ्घ्रिप्रणामयोग्यं मां समालिङ्गन्भुजोरसा ।
यं प्रसादं व्यधास्तस्य भविष्याम्यनृणः कुतः ? ॥ ५० ॥

वीरधवलः—मन्त्रिमाणिक्य ! मा मैवम् । अहमेव तवाधमर्णोऽस्मि ।

अकृत मदनदेवी शैशवे लालनं य-
न्नववयसि यदर्णोराजसूनुश्च पोषम् ।

तव मतिरधुनाऽसौ यच्च राज्यस्थितिं मे
कथमहमनृणः स्यामत्र मन्त्रिन्नमीषाम् ॥ ५१ ॥

यतः—सिद्धसिन्धुविशुद्धया तव बुद्ध्यैव मिथोविरोधबद्धसकलविरोधकुलया मम्राषि शौर्य कमपि महिमानमानयन्त्याऽसुरचक्रचूडामणिरपि तथा त्रासितः सोऽपि हम्मीरवीरः यथा पुनरपि विक्रमेण नोपक्रमते ।

तेजःपालः—देव चुलुक्यकुलकमलकलहंस ! कंसविक्रमोऽपि मीलच्छीकारः सन्धानपदवीमप्ययमधुनाऽधिरोपितो बुद्धिचातुर्यैरार्यस्य ।

वीरधवलः—( सहर्षौत्सुक्यं वस्तुपालं प्रति ) कथमिव ? ।

वस्तुपालः—देव ! तस्मात्खलीपक्षितिपते राज्यस्थापनामयं प्रसादमासाद्य तत्प्रधानपुरुषेण वज्रदीननाम्ना पुरस्कृतं रदीकादीनामधेयं मीलच्छीकारस्य गुरुद्वयं पाथोनिधिपथेन प्रवहणारूढमागच्छत् गुप्तचरमुखेभ्यो मत्त्वा द्रुतप्रेषितप्रचुरप्रवहणाधिरूढैः प्रवीरैर्बन्दीकृत्य स्तम्भतीर्थे धृतमभूत् । ततस्तन्मुक्त्यर्थं प्रेषितागतप्रधानपुरुषगतागतप्राचुर्येण आजन्मापि सन्धानमकारि मीलच्छीकारेण ।

वीरधवलः—( सप्रमोदम् )

त्वमेव मे भुजद्वन्द्वं स्कन्धावारस्त्वमेव मे ।
त्वमेव मे महत्पुण्यं मन्त्रिराज ! द्विषज्जये ॥ ५२ ॥

( इत्युपसर्पति )

तेजःपालः—देव ! पश्य ! पश्य !

हसतीवाग्रतः सौधरुचिसञ्चयलीलया ।
नृत्यतीव ध्वजभुजैः पुरीयं त्वयि वीक्षिते ॥ ५३ ॥

( इति पुरप्रवेशं नाटयन्ति )

वस्तुपालः—देव ! दिग्जयजागरूकशक्ते !

तेजोदिवाकरयशोरजनीकरश्री-
भिन्नाकृतिं पुरि निरीक्ष्य चिराद्भवन्तम् ।
तुल्यं मुखाम्बुजविलोचनकैरवाणि
लोकस्य पश्य कलयन्ति विकासकेलिम् ॥ ५४ ॥

तेजःपालः—देव सौभाग्यभाग्यनिधे !

वीक्षाकुतूहलमिलत्तरुणीकटाक्ष-
कान्तिच्छटाविशदभासि हृदि त्वदीये ।
आनन्दिनः पुरजना विकचप्रसून-
मालाधिरोपपुनरुक्तिममी सृजन्ति ॥ ५५ ॥

वस्तुपालः—देव वसुधासुधाकर !

पर्वतेष्विव मञ्चेषु त्वत्कीर्त्तय इवाश्रिताः ।
नृत्यन्ति दिव्यगौराङ्ग्यस्त्वय्यायाते जितद्विषि ॥ ५६ ॥

वीरधवलः—( तेजःपालं प्रति ) सखे! रिपुविजययशःकुसुमिताया मन्त्रीशमतिलतायाः प्रत्यक्षफलमिवावलोकयामि पुरतः प्रथितरसालङ्करणनिजागमनमहोत्सवमहनीयमिदं नरेन्द्रसदनम् ।

( इति धवलगृहप्रवेशं नाटयित्वा तुरङ्गादुत्तीर्य निबिडभक्तिभराक्रान्तस्त्वरिततरसञ्चरणेन देवतालयं प्रविष्टः प्रकृष्टपरिमलमिलदलिकुलगीयमानगुणैरनणुभिः कुसुमैरभ्यर्चितं भगवन्तं भवानीपतिमग्रतो विभाव्य समुद्भिन्नरोमाङ्कुरकर्बुरशरीरः स्तुतिमकरोत् । )

त्वद्भालनयनोदर्चिस्त्वच्चूलाचन्द्रधामभिः ।
त्वन्नमस्कारिणां नाथ ! तेजः कीर्त्तिश्च चञ्चतः ॥ ५७ ॥
प्रसन्ना यत्र जायेत भवन्नेत्राम्बुजत्रयी ।
स स्यात्त्रिविधवीरश्रीभूरिसौरभ्यभाजनम् ॥ ५८ ॥

(इत्यभङ्गुरभक्तिवशीकृतहृदयः पूजाकुसुमसमुदयान्तर्गत एव त्र्यक्षः प्रत्यक्षीभूय वीरधवलं प्रति)

शम्भुः—वत्स ! भवत्सहजोज्ज्वलभावभङ्गिभिरतिप्रीतोऽहं किं ते प्रियमुपकरोमि ?।

वीरधवलः—त्वत्पादाब्जप्रसादाज्जयति मम चमत्कारकृद्वस्तुपाल-
स्तेजःपालश्च मन्त्रिद्वयमियमवनिः साधुवादेन पत्नी ।
कीर्त्तिस्तेजश्च शीतच्छविरविविभवस्पर्द्धिनी नित्यसेवा-
हेवाकिद्वेषिपृथ्वीपरिवृढपटलं राज्यमेकातपत्रम् ॥५९॥

किमतःपरमपि मम प्रियमस्ति । तथापीदमस्तु—

वृष्टिं प्रत्यब्दमब्दा विदधतु वसुधाऽनेकशस्यप्रशस्या
भूयाद्भूयांसि भूपा जगति जयजुषो योजयन्तां यशांसि ।

वाणीवीणारवोद्यन्मधुमधुरगुणाः कोविदाः काव्यभङ्गी-
मङ्गीकुर्वन्तु सर्वे सुकृतमविरतं साधवः साधयन्तु ॥ ६० ॥

शम्भुः—एवमस्तु ।

( इति निष्क्रान्ताः सर्वे )



## पञ्चमोऽङ्कः

चन्द्रे चन्दनचर्चनव्यतिकरः पीयूषकुण्डे पयः-
प्रक्षेपः सरसीरुहे च सुमनोवासोऽयमासूत्रितः ।
श्रीमच्चण्डपगोत्रमण्डनमणे श्रीवस्तुपाल स्वयं
वाग्देव्या त्वयि ढौकितं यदधुना मन्त्रिन् ! मया नाटकम् ॥ १ ॥

आकल्पं ककुभासुरस्त्वदसुहृदुत्कीर्त्तिभृङ्गप्रिया-
सम्पृक्तैव भवद्यशस्ततिमयी मालेयमालम्बताम् ।
एतन्नाटककाव्यमण्डलमयी माला तु नित्यं सतां
कण्ठे क्रीडतु दुर्जनाननविभाभृङ्गाङ्गनासङ्गिनी ॥ २ ॥

इति श्रीहम्मीरमदमर्दनं नाम नाटकम् ।



संवत् १२८६ वर्षे आषाढवदि ९ शनौ हम्मीरमर्दनं नाम नाटकम् ।



# APPENDIX I.

## श्रीवस्तुपालतेजःपालप्रशस्तिः

श्रेयः श्रीमुनिसुव्रतः स तनुतां यो मन्दरागस्तले
तन्वानः कमठाधिनाथमभृतोद्धारैकधौरेयकः ।
निर्मथ्यैनमधर्मकर्मलहरीपूरैरपारं भवा-
कूपारं पुरुषोत्तमाय न तमां दत्ते स्म कस्मै श्रियम् ॥ १ ॥
यस्मै रश्मिभरो गभीरिमगुणक्रान्तेन कल्लोलिनी-
कान्तेनाञ्जनपुञ्जमञ्जिमजयी शङ्के स्वकीयोऽर्पितः ।
यस्यैव क्रमसेवनाय च मुदा मुक्तोऽङ्गभूः कच्छपो
लेभे लाञ्छनतां स यच्छतु सतां श्रीसुव्रतो निर्वृतिम् ॥ २ ॥
आनन्दाय सुदर्शनाऽस्तु जगतां यस्या मुखेनाग्रतो
नम्रायाः मुनिसुव्रतक्रमनखादर्शप्रतिच्छन्दिना ।
आत्मद्वादशतां वहन्नहरहर्देवो हिमांशुर्महा-
कल्पानल्पपतङ्गपाटवतिरस्कारे चकारोद्यमम् ॥ ३ ॥
रक्षादक्षो दिवि दिविषदां कोऽपि सन्ध्यासमाधिं
ध्यातुर्धातुश्चुलुकजलतः शौर्यराशिः पुरासीत् ।
प्रेङ्खत्खड्गप्रतिमितितया सम्मुखीनो बभूव
भ्रूसंरम्भत्रसदसुहृदो यस्य युद्धे य एव ॥ ४ ॥
वंशे विश्वत्रितयविदितः पर्वणां वेश्म तस्मा-
च्चौलुक्याख्यः समजनि समुन्मीलदौन्नत्यलीलः ।
तच्चूलाग्रस्मितसितयशश्चेलतानातिरेका-
देकच्छत्रामतनुत महीं मूलराजो महीन्दुः ॥ ५ ॥
कृत्वाऽधः कच्छपं सिन्धुराजप्रक्षोभशोभितः ।
अमन्दरोचितभुजोऽप्यभवद्यः श्रियः प्रियः ॥ ६ ॥
कीर्त्तिस्तोमसुधाभृतानि वसुधाखण्डानि रेजुः सुधा-
कुण्डानीव नवत्रिविष्टपसदां स्वाद्यानि यस्मिन्विभौ ।

रक्षानागचतुष्किका इव सदा सेवासमायातषट्-
त्रिंशद्राजकुलीयदक्षिणभुजव्याजेन येषां बभुः ॥ ७ ॥
तस्मादकृष्मलमिलन्निजकीर्त्तिभूति-
शुभ्रीकृतां निजमहोदहनाक्षिदीप्ताम्।
मूर्त्तिं हरस्य धरणीं रिपुराजमुण्डै-
श्चामुण्डराज इति राजयति स्म राजा ॥ ८ ॥
यत्खड्गवल्ली हरसिद्धिसिद्धप्रपेव रेजे समराटवीषु ।
मृत्यून्मुखैः साहसिभिर्यशोम्भः क्रीतं निजाङ्गक्षतजेन यस्याम् ॥ ९ ॥
भूवल्लभस्तदनु वल्लभराजदेवः
ख्यातः क्षितौ समिति यः स्मितविभ्रमाभिः ।
दग्धामदामभिरपूजि सुराङ्गनाभिः
शृङ्गारदैवतमिवेप्सितकान्तदाता ॥ १० ॥
स्वयं विनम्रेषु परेषु युद्धसिद्धैकचिन्ताचयचान्तनिद्रः ।
यः स्वप्नसङ्ख्यैरपि बाहुदण्डकण्डूतिनिर्भेदमुदं न भेजे ॥ ११ ॥
तस्मादभूद्भूवलयस्य भूषा भीदुर्लभो दुर्लभराजराजः ।
यस्यासिसिन्धौ विततामिरेत्य मग्नं महीभृत्कुलवाहिनीभिः ॥ १२ ॥
सुरस्त्रीणां नेत्रं सृजति निजरूपादनिमिषं
ध्रुवं तस्मिन् भस्मीकृतरिपुरभूद्भीमनृपतिः ।
यदुत्पाते जाते द्रुतवृतभियो भोजनृपते-
रुरः श्रीरास्यं गीः करमसिलतायुक्तममुचत् ॥ १३ ॥
यद्दानोदकजातसिन्धुपटलैः कीर्त्तिप्रभापाण्डुभिः
शत्रुस्त्रीजनसाञ्जनाश्रुसलिलस्रोतस्विनीभिः समम् ।
सम्भिन्नैव पदे पदे तनुमतामन्तः समन्तान्मुदं
तन्वद्भिर्जितगाङ्गयामुनजलैर्धात्री पवित्रीकृता ॥ १४ ॥
क्रामन्ति स्म यथा यथाम्बरपथान् यात्रासु यत्रावनी-
जैत्रे सर्पति दर्पतारतुरगक्षुण्णा रजोराजयः ।
पश्यन्तीव तथा तथा त्रिपथगातोयेऽपि विच्छायतां
शङ्के कीर्त्तिरगादधौतधवला दूरेऽतिदूरादपि ॥ १५ ॥
तस्माद्विस्मारितरतिपतिः कामिनामङ्गधाम्ना
नाम्ना कर्णः समजनि भुजाशालिनां मौलिरत्नम् ।

निन्द्यं बन्दिग्रहमपि निजं बह्वमन्यन्त मन्ये
धन्यम्मन्या रिपुयुवतयो यस्य रूपं निरूप्य ॥ १६ ॥
यदङ्गघटनोत्सृष्टैः परमाणुगणैरिव ।
विधिर्विधाय कन्दर्पं सदर्पां द्यामपि व्यधात् ॥ १७ ॥
सप्ततन्तुप्रपञ्चेन यस्तां कीर्त्तिपटीं व्यधात् ।
चतुर्दशापि विश्वानिच्छादयाञ्चक्रिरे यया ॥ १८ ॥
व्यजयत जयसिंहदेवभूपस्तदनु दिशस्त्रिदशप्रभुप्रभावः ।
यशसि यदसिषे नु दुग्धमुग्धैः श्रितमुडुभिर्दिवि दोहफेनसाम्यम् ॥ १९ ॥
तत्त्रैलोक्यनिभत्रिभूमिकगृहक्रोडस्फुरन्मालव-
क्ष्माभृत्कीर्त्तिनितम्बिनीमुखपरिक्षेपाय पांसूत्करम् ।
लीलालुप्तजगद्द्वयं खरखुरोत्खातक्ष्मामण्डल-
च्छिद्रौघैरुरगालयेऽपि तुरगा यस्य क्षणाच्चिक्षिपुः ॥ २० ॥
विश्वस्योपकृतिव्रतव्यतिकरैस्तैर्यद्यशस्तेजसोः
सामान्यप्रतिपत्तिमप्यसुलभां लब्धेन्दुतीव्रद्युती
काङ्क्षन्तौ चिरनन्दितामिव तयोरायुःप्रवृद्ध्यौषधीं
द्रष्टुं काञ्चन काञ्चनक्षितिधरोपान्तेऽपि तौ भ्राम्यतः ॥ २१ ॥
तत्कालं कलहे निहत्य किमपि प्रत्यायिताः शात्रवः
स्वर्गस्त्रीपरिरम्भणेऽपि न मनःस्वास्थ्यं समासेदिरे ।
यं कल्पान्तकृतान्तवक्त्रकुहराकारस्फुरत्कार्मुकं
पश्यन्तः प्रसरन्तमद्भुतभयावेशेन मीलद्दृशः ॥ २२ ॥
अवञ्चयन्नाशु कृपाणपातं विरोधिवीरान्नमनक्रियाभिः ।
यस्याङ्घ्रिपङ्केरुहबद्धवासां लक्ष्मीं च दक्षा रभसादगृह्णन् ॥ २३ ॥
स्वैरेव प्रहतैर्द्विषद्भिरमरीभूतैः सुरीभिः समं
गीतं प्रीतिरसैः स्वमेव हृषिते तस्मिन् यशः शृण्वति ।
क्ष्मां पाति स्म कुमारपालनृपतिर्यत्कीर्त्तिकालुष्यदं
तद्बाष्पाञ्जनकश्मलं न रुदतीवित्तं सवित्तोऽग्रहीत् ॥ २४ ॥
जैनं धर्ममुरीचकार सहसाऽर्णोराजसत्रासयद्
बाणैः कुङ्कणमग्रहीदपि गुरूचक्रे स्मरध्वंसिनम् ।
इत्थं यस्य परिक्षतक्षितिभृतो हंसावलीनिर्मलै
रामस्येव निरन्तरं नवयशःपूरैर्दिशः पूरिताः ॥ २५ ॥

तादृग्दानपरम्पराभिरभितो निष्काश्य कालं कलिं
त्रेताद्वापरयोरहम्प्रथमिकाबद्धस्पृहं पश्यतोः ।
श्रेयश्चन्दनतो विशेषकविधिं कृत्वा यशोजाह्नवी-
पाथोभिः कृतिना स्वयं कृतयुगो येनाभिषिक्तः क्षितौ ॥ २६ ॥
अजयदजयपालभूमिपालः क्षितिमथ मन्मथमञ्जुलेन येन ।
त्रिपुररिपुरपि प्रसूनबाणैरिव पिहितः सहसा यशःसमूहैः ॥ २७ ॥
अन्तर्यत्कीर्त्तिकासारं कृतस्नानस्य सर्वतः ।
लग्नफेनलवायन्ते तारागगनदन्तिनः ॥ २८ ॥
बालः श्रीमूलराजोऽथ विक्रीडन्समराङ्गणे ।
द्विषल्लताप्रतानानि समूलमुदमूलयत् ॥ २९ ॥
आपपे प्रसृतिसम्भ्रमेण यत्तेजसा रिपुयशःसुधारसः ।
तेन निर्गलितबिन्दुवृन्दवद् द्योतते वियति तारकाततिः ॥ ३० ॥
भूमीभारमथो बभार भुजयोः श्रीभीमदेवो विभु-
र्दानारम्भविजृम्भमाणविभवप्रागल्भ्यगर्जद्यशाः ।
गीतो यत्तुलया विरोचनसुतः पातालवैतालिकै-
रथोत्तालमनोभिरन्वहमहङ्कारं चकार स्मितः ॥ ३१ ॥
यदाननसरोजेन नित्यस्मेरेण निर्जितः ।
सज्जलज्ज इवामज्जत् यद्यशोजलधौ विधुः ॥ ३२ ॥
अर्णोराजाङ्गजातं कलकलहमहासाहसिक्यं चुलुक्यं
श्रीलावण्यप्रसादं व्यतनुत स निजश्रीसमुद्धारधुर्यम् ।
यस्य प्रत्येकधाराद्वयफलितभुजायुग्मशाली रिपूणां
कीलालैः पीतवासा इव समिति चतुर्बाहुतामेति खड्गः ॥३३॥
तादृक्कम्पव्यतिकरभृतां सर्वतः पर्वतानां
व्यातन्वद्भिः क्षयसमयमरुत्पूरशङ्कातिरेकम् ।
यत्प्रत्यर्थिक्षितिधववधूवर्गनिश्वासवात-
व्रातोत्पातैरिव दिवि सदा भ्रेमुरर्केन्दुताराः ॥ ३४ ॥
भूभारोद्धृतिधुर्यदुर्द्धरभुजस्तस्याङ्गजन्मा स्फुर-
त्कीर्तिः श्रीधवलोऽस्ति वीरधवलोऽहङ्कारलङ्केश्वरः ।
यस्मिन्निघ्नति मार्गणै रिपुगणं हृष्यन्ति तस्याङ्गनाः
कामोऽयं कुरुते मदेकवशगं चित्तेशमित्याशया ॥ ३५ ॥

विक्रीडतो यस्य नवप्रतापयशःकुमारौ जगदङ्गणान्तः ।
प्रभावभाजौ लसतस्तदङ्गरक्षासु दक्षाविव सूरराजौ ॥ ३६ ॥
पाताले बलिराजराज्यविशदे विश्वम्भरामण्डले
यल्लीलायितमञ्जुले सुरपुरे कल्पद्रुमुद्राजुषि ।
दारिद्र्येण भयद्रुतेन सहसा यद्वैरिवीराश्रया-
दश्रान्तप्रसरेण शैलशिखरिक्रोडेषु विक्रीडितम् ॥ ३७ ॥
यस्यासिरम्भोदसहोदरश्रीः शौर्यद्विपस्येव मदप्रवाहः ।
सर्पन्सदर्पारिनरेन्द्रकीर्त्तिकासारपूरं कलुषीचकार ॥ ३८ ॥
सचिवप्रवरं कश्चित्प्रार्थितस्तेन पार्थिवः ।
श्रीमान् भीमो मुदा वाचमुवाच श्रवणामृतम् ॥ ३९ ॥
वाग्देवताचरणकाञ्चननूपुरश्रीः
श्रीचण्डपः सचिवचक्रशिरोऽवतंसः ।
प्राग्वाटवंशतिलकः किल कर्णपूर-
लीलायितान्यधित गूर्जरराजधान्याः ॥ ४० ॥
मतिकल्पलता यस्य मनःस्थानकरोपिता ।
फलं गूर्ज्जरभूपानां सङ्कल्पितमकल्पयत् ॥ ४१ ॥
वाग्देवीप्रसादः सूनुश्चण्डप्रसाद इति तस्य ।
निजकीर्त्तिवैजयन्त्या अनयत गगनाङ्गणे गङ्गाम् ॥ ४२ ॥
पातालमूले पिहितांशुभासः पृथ्वीविभागेऽपि हराट्टहासः ।
स्वर्गेऽपि दुग्धाब्धिपयोविलासः कीर्त्तिर्यदीया त्रिजगत्युवास ॥ ४३ ॥
कीर्त्तिकश्मलितपार्वणसोमः सोम इत्यजनि तस्य तनूजः ।
सिद्धराजगुणभूषणभाजः संसदो विशददर्पणकल्पः ॥ ४४ ॥
उत्कर्षप्रगुणां गुणागुणपरिज्ञानौचितीं मन्महे
तस्य प्रीतिरसादनन्यमनसा येनान्वहं सेविताः ।
देवस्तीर्थकृदेव केवलनिधिर्विद्यानिधानं गुरुः
सूरिः श्रीहरिभद्र एव गुणधीः सिद्धेश एवाधिपः ॥ ४५ ॥
सीताकुक्षिसरोवरैकवरलाकान्तोऽश्वराजाख्यया
तस्याभूत्तनुभूः सदापि जननीभक्तौ च यः पावनः ।
स्फूर्जद्धूर्जटिजूटकोटरपदन्यासोत्थपापच्छिदे
स्वर्नद्याऽपि समाश्रितः सितलसत्कीर्त्तिच्छविच्छद्मना ॥ ४६ ॥

सप्तलोकचरी सप्ततीर्थयात्रासमुद्भवा ।
गङ्गां जिगाय यत्कीर्त्तिर्विश्वत्रितयविस्तृताम् ॥ ४७ ॥

भैमीव नैषधमहीरमणस्य तस्य
कान्ता सती समजनिष्ट कुमारदेवी ।
यन्मानसे जिनपदाम्बुजभाजि शुद्ध-
पक्षद्वयः पतिरराजत राजहंसः ॥ ४८ ॥

श्रीमल्लदेव इति तत्तनुभूर्बभूव
यत्कीर्त्तिपूरशशिनोर्गगनाङ्कपीठे ।
स्पर्द्धोद्धुरं प्रसृतयोरिव साम्यदण्डं
स्वर्दण्डमेव विधिरन्तरधत्त हृष्टः ॥ ४९ ॥

विद्येते हृद्यविद्यौ तदनु तदनुजौ धीनिधी वस्तुपाल-
स्तेजःपालश्च तेजस्तरणितरुणिमस्फूर्त्तिरोचिष्णुमूर्त्ती ।
श्रीमन्तेतौ निजश्रीकरणपदकृतव्यापृती प्रीतियोगा-
त्तुभ्यं दास्यामि विश्वं जयतु नवनवं धाम तन्मन्त्रमित्रम् ॥ ५० ॥

इत्युक्त्वा प्रीतिपूर्णाय श्रीवीरधवलाय तौ ।
श्रीभीमभूभुजा दत्तौ वित्तमाप्तमिवात्मनः ॥ ५१ ॥

अन्ये केचन रोचमानमतयो मन्त्रीश्वरा भास्करा
लप्स्यन्ते बत वस्तुपालसचिवाधीशेन साम्यं कुतः ।
सार्द्धं यल्लघुबन्धुनाऽपि दिविषद्वृन्दैकमान्यः स्वयं
सामान्यप्रतिपत्तिगौरवपदं वाचस्पतिर्वाञ्छति ॥ ५२ ॥

वीरश्रीवरधाम्नि वीरधवले सिंहारवान्मारवान्
जेतुं यातवति प्ररूढपुलकैरङ्कुरयन्पौरुषम् ।
यस्तीर्त्वा यदुसिंहसिंहणबलाम्भोधिं भुजक्रीडया
गर्जन्नर्जितवान् यशस्त्रिजगतीमुक्तालतामण्डनम् ॥ ५३ ॥

सम्पूर्णे भुवने घनेन रजसा श्रीतीर्थयात्रापरि-
स्यन्दिस्यन्दनवृन्दतारतुरगव्रातक्रमोत्पातिना ।
यत्कीर्त्तेः सह पांशुकेलिसुहृदो नन्दन्ति मन्दाकिनी-
दुग्धाम्भोधिविभावरीविभुककुप्कुम्भीन्द्ररुद्रादयः ॥ ५४ ॥

येनाऽकारि तमोनिकारि कलशालङ्कारि शत्रुञ्जय-
क्ष्माभृन्मण्डनमिन्द्रमण्डपमहो नाभेयभर्त्तुः पुरः ।

तेनैकां द्युधुनीं दधद्धिमगिरिः पार्श्वस्थपार्श्वप्रभु-
श्रीमन्नेमिनिकेतकेतनयुगाभोगेन निर्भत्सितः ॥ ५५ ॥
यः शत्रुञ्जयशेखरं जिनगृहश्रीतारहारं स्खल-
त्ताराधोरणि तोरणं यदसृजत्तन्मूर्ध्नि लक्ष्मीः स्थिता ।
शङ्केऽभूदुदितद्विपक्षवदना नन्तुं समागच्छतो
नाभेयं प्रणिपत्य च प्रचलतो यस्यास्यवीक्षाशया ॥ ५६ ॥
श्रीशत्रुञ्जयशृङ्गसीम्नि सरसि प्राप्याम्बु यत्कारिते
नीचत्थाय सुधाकराय विबुधाः कुर्वन्ति नोपक्रमम् ।
इत्यूहं कृतिनोऽन्वहं विदधते कुन्दावदातद्युता
भास्वच्छाश्वतराकया जगति यत्कीर्त्या परीतेऽभितः ॥ ५७ ॥
येन व्यधाप्यत विधुद्युतिहारिवारी
श्रीपादलिप्तनगरीमुकुरस्तडागः ।
यद्यस्त्यगस्तिरिह कोऽपि तदेतु तन्या-
द्दोःस्फालनं मुहुरितीव महोर्मिभिर्यः ॥ ५८ ॥
अर्कपालितकग्रामे तेन तेनेऽद्भुतं सरः ।
यस्य निस्यन्दलेखेव पार्श्वे वहति वाहिनी ॥ ५९ ॥
येनोज्जयन्तगिरिमण्डननेमिचैत्ये
नाभेयपार्श्वजिनसद्मयुगं व्यधायि ।
अन्तःस्वयंघटितनाभिजनेमिनाथ-
श्रीस्तम्भनेशगृहमप्युदधारि हारि ॥ ६० ॥
स्वर्गं यद्गुरुचैत्यतोरणशिरः पद्यापदैः प्रापय-
द्वापीकूपतडागमार्गचलनैः पातालमूलं ययौ ।
सा यत्पौषधमन्दिरोदरवरारामप्रपामध्यभू-
विश्रामश्रयणेन भूमिमपि यत्कीर्त्तिर्मुहुर्गाहते ॥ ६१ ॥
यन्निर्मापितदेवमन्दिरशिरःकल्याणकुम्भप्रभा-
प्राग्भारैर्विदधे सदा सुदिवसं सर्वत्र धात्रीतले ।
दृश्यः शाश्वतिकस्तथा प्रसृमरश्यामच्छविच्छद्मना
यत्खड्गक्षतवैरिवामनयनावक्त्रेषु रात्रिक्षणः ॥ ६२ ॥
अस्थापयत्स्थिरमतिः शकुनीविहारे
संसारतारिलसदम्बडधर्मपुञ्जे ।

श्रीपार्श्ववीरजिनपुङ्गवयुग्मदम्भा-
द्यो यामिकद्वयमिवाग्निमधर्मबन्धुः ॥ ६३ ॥
तमेकदा करारोपभर्त्सितस्वर्णशेखरः ।
श्रीतेजःपालमन्त्रीशो मुदा ज्येष्ठं व्यजिज्ञपत् ॥ ६४ ॥
सुव्रतक्रमनमस्कृतिहेतोर्यातवान्भृगुपुरं प्रति सोऽहम् ।
काव्यमुज्ज्वलनयो जयसिंहसूरिरित्यपठदत्र मदग्रे ॥ ६५ ॥
तेजःपाल कृपालुधुर्यविमल प्राग्वाटवंशध्वज !
श्रीमन्नम्बडकीर्त्तिरद्य वदति त्वत्सम्मुखं मन्मुखात् ।
आजन्मावधि वंशयष्टिकलिता भ्रान्ताऽहमेकाकिनी
वृद्धा सम्प्रति पुण्यपूर्ण भवतः सौवर्णयष्टिस्पृहा ॥ ६६ ॥
इत्युक्त्वा मम पञ्चविंशतिमितास्तेन स्वयं दर्शिता-
स्तस्मिन्सुव्रतधाम्नि देवकुलिकाः कल्याणकुम्भस्पृशः ।
ताः सौन्दर्यभृतोऽपि कान्तिनिधिभिः कल्याणदण्डैर्विना
सीमन्तैरिव सुभ्रुवो विदधते नान्तः सतां सम्मदम् ॥ ६७ ॥
आदेशं देव यद्येवं दत्से स्वच्छेन चेतसा ।
हेमदण्डानिमानत्र तदहं कारये स्यात् ॥ ६८ ॥
इत्यन्तःस्मितवस्तुपालसचिवादेशाल्लसत्तेजस-
स्तेजःपालमहामतिर्व्यरचयत्कल्याणदण्डानिमान् ।
प्रत्येकं हरहासहारिमहसो येषां शिखासु स्थिता
नृत्यन्ति प्रतिवासरं परिचलत्केतुच्छलात्कीर्त्तयः ॥ ६९ ॥
जुह्वन्पातकपादपैकदहने तीर्थेशधर्मे निजां
कर्मालीं न कति क्रतूनकृत स श्रीवस्तुपालानुजः ।
दण्डा यूपवदुच्चसुव्रतगृहक्ष्माभृद्भवायाममी
तत्तेनाम्बडमण्डलेश्वरयशःसिन्धौ समारोपिताः ॥ ७० ॥
दत्ते चेतसि सम्मदं सुकृतिनां तेनेयमुत्तम्भिता
चञ्चच्चारुमरीचिवीचिकलिता कल्याणदण्डावलिः ।
पूर्वोर्वीधरकुञ्जतः प्रसरता प्रातर्वियत्कानने
यत्रागत्य भियेव गोपतिगवीवृन्देन मन्दायते ॥ ७१ ॥
यावच्चण्डपगोत्रमण्डनमणेः कीर्त्तिर्वियद्वाहिनी-
हस्ता दिग्गजगर्जिवाद्यविभवैर्व्योमाङ्गणे नृत्यति ।

दण्डास्तावदमी सुवर्णघटनाविभ्राजिनः केतन-
क्रीडत्किङ्किणिकारवव्यतिकरैः कुर्वन्तु गीतक्रमम् ॥ ७२ ॥
तेजःपालयशोविलासविशदश्रीणां दिशां कौतुक-
क्रीडामण्डपडम्बरं सहदहो यावद्दधात्यम्बरम् ।
तावन्नूतनजातरूपजनितः सोऽयं समुत्तम्भन-
स्तम्भस्तोमसमानतां वितनुतामुद्दण्डदण्डव्रजः ॥ ७३ ॥
स्वस्तिश्री व्योमदेशादुदयनतनुभूकीर्त्तिरुर्वीतले श्री-
तेजःपालं प्रसन्ना वदति मतिमतां वन्द्य ! नन्द्या सदायुः ।
येन त्वत्क्लृप्तहेमध्वजविततभुजा दुःषमादाहदूनां
लिम्पन्तीं ता मुहुर्मामिह जिनगृहिकास्त्वद्यशश्चन्दनेन ॥ ७४ ॥
मोहो द्रोहधियाऽधिरोहति रसं श्रीपुञ्जहृत्पञ्जरे
क्षिप्तो यः कलिकालकेलिविधुरो दक्ष ! त्वया रक्षितः ।
श्रीसोमान्वयवार्द्धिवर्द्धनकलासोम ! स्वयं निर्मलो
धर्मः प्रत्युपकारकर्मठतया स त्वां क्षितौ रक्षतु ॥ ७५ ॥
श्रीवस्तुपाल ! तव चित्तवनप्ररूढः
सत्त्वोपकारमतिसारणिसिच्यमानः ।
सत्पत्रपुण्यकुसुमः फलदोऽस्तु तुभ्य-
मव्याजविश्वसुहृदे जिनधर्मवृक्षः ॥ ७६ ॥
श्रीसुव्रतपदाम्भोजमधुव्रातमधुव्रतः ।
एतां प्रशस्तिमस्ताघां जयसिंहः कविर्व्यधात् ॥ ७७ ॥

---

# APPENDIX II.

# स्तुतिकाव्यानि

स्वस्तिश्री वस्तुपालाय बभौ यद्बुद्धिसुभ्रुवः ।
क्रोडीकृताम्बरं रौप्याञ्जनभाजनवद्यशः ॥ १ ॥

अन्तःक्षारं रिपूणां घनमपि कवलीकृत्य तृष्णातुरेव
त्वत्कीर्त्तिर्नाप तृप्तिं भुवि सचिव! जवात्क्षीरनीराकरेऽपि ।
तस्मादाकाशनाकोरगनगरचरस्वर्ङ्गनीपानहेतोः
सर्वत्रापि त्रिलोकीहितचरित! चिरं सम्भ्रमाद्भम्भ्रमीति ॥ २ ॥

भवद्भुजभुजङ्गोऽसौ वस्तुपाल! द्विषां भिये ।
असिं दधाति फूत्कारविषोद्गारसहोदराम् ॥ ३ ॥

औषधीशसखः सत्यं वस्तुपालयशोभरः ।
येन प्रसर्पता पश्य विश्वं मुक्तामयं कृतम् ॥ ४ ॥

शेषद्वेषविधायिनीमपि भवत्कीर्त्तिं सुधासोदरां
श्रीमन्त्रीश ! मुखस्फुरद्विषभिदे गायन्ति नागाङ्गनाः ।
शम्भुः स्वाङ्गविरोधिनीमपि पुनर्नित्योपरोधादिमां
देवीर्गाययते विषाकुलगलश्यामत्वसंलुप्तये ॥ ५ ॥

कल्पद्रुप्रसवावतंसमधुपीझङ्काररब्धोपमाः
कामं कामगवीनवीनपयसां पानेन तारस्वराः ।
ताश्चिन्तामणिरश्मिभस्मिततमःस्तोमे सुमेरोर्गुहा-
गर्भे चण्डपगोत्रमण्डन! भवद्दानानि देव्यो जगुः ॥ ६ ॥

देव ! त्वत्प्रतिपन्थिपार्थिवपुरीसौधाग्रभागादिव
प्राप्य व्योमविहारदुर्लभमपि प्रौढप्ररूढप्रभः ।
श्रीमच्चण्डपगोत्रमण्डन ! भवत्कीर्त्या जितो यामिनी-
जीवेशस्तनुते तृणं निजमुखे लक्ष्मच्छविच्छद्मना ॥ ७ ॥

गुणग्रामे रामे जितसितकरे सत्यपि निजे
स्वयं गृह्णासि त्वं परगुणमतादृक्षमपि यत् ।
अयं लोभक्षोभश्चतुर ! चतुराम्भोधिरसना-
वनीशिक्षादक्ष! स्फुरति किमु ते मन्त्रिमुकुट! ॥ ८ ॥

भोगीन्द्रस्त्वद्भुजेन त्रिपुररिपुरपि त्वत्प्रभुत्वप्रभावैः
शीतांशुस्त्वन्मुखेन त्रिदशसरिदपि त्वच्चरित्रप्रपञ्चैः ।
शङ्केभस्त्वद्गतेन प्रसभमशुभतां लम्भिताः सज्जलज्जं
निर्मज्जन्ति स्म तस्मिन्सचिव तव यशस्तोयधौ वस्तुपाल ! ॥ ९ ॥

भर्त्ता भोगभृतां बिभर्त्ति वसुधामेव प्रभावाद्भुतां
दिग्दन्तीन्द्रकरस्तु हन्ति च रिपून् धत्ते च धात्रीमिमाम् ।
श्रीमन्त्रीश! भवद्भुजस्तु कृतिनां दत्ते च वित्तव्रजं
भिन्ते च द्विषतो दधाति च धरामेषां क साम्यं मिथः ॥ १० ॥

इन्दुर्निन्दति कौमुदीसमुदयं मुक्तामणीनां तति-
र्मुक्ताहङ्कृतिरस्तचण्डिमहिमं दर्प्पी न सर्पाधिपः ।
गर्वं शर्वधराधरो न कुरुते न स्वर्ङ्गनी स्पर्द्धिनी
श्रीमन्त्रीश्वरवस्तुपालयशसि त्रैलोक्यमाक्रामति ॥ ११ ॥

बलिकर्णदधीचिकीर्त्तयः कलिपङ्कार्पितमत्यजन्मलम् ।
तव दानपयोनदीकृतस्नपनाश्चण्डपगोत्रमण्डन !॥ १२ ॥

शङ्के पङ्कजिनीपतिः क्रतुभुजां सार्थैः स्वयं प्रार्थितः
कर्षं कर्षमिलातलादनुदिनं त्वद्दानतोयच्छटाः ।
श्रीमच्चण्डपवंश्य! सिञ्चति शचीचित्तेशलीलावनं
नैवं चेत्कथमन्यथा विटपिनामप्यत्र दानक्रिया ॥ १३ ॥

---

१ These *Stutikâvyas* are incomplete, as it seems one leaf in the palm-leaf ms is missing at the end.

## APPENDIX III

# सुकृतकीर्तिकल्लोलिनी

चिन्तातीतफलप्रदः स दिशतु श्रेयो युगादिप्रभु-
र्भेजुर्जन्मनि यस्य कल्पतरवः सर्वेऽप्युपादानताम्।
नैत्थं चेत्कथमन्यथा वसुमतीमस्मिन्नलङ्कुर्वति
त्रैलोक्यैकगुरौ न गोचरममी जग्मुर्जगच्चक्षुषाम् ॥ १ ॥

पापं पङ्कजयन्मदं कुमुदयन्मोहं तमःस्तोमयन्
बुद्धिं तोयदयन्नतिप्रणयिनां चन्द्राश्मयन् लोचनम्।
पीयूषप्रतिमल्लनिर्मलगवीप्रक्षालितक्ष्मातल-
स्तापव्यापदपास्तयेऽस्तु जगतः श्रीमान्मृगाङ्को जिनः ॥ २ ॥

श्रीनेमिर्नवनीलनीरजरुचिः श्रेयांसि निःश्रेयस-
श्रीविश्रान्ततनुस्तनोतु कृतिनां सौभाग्यभङ्गीगुरुः।
सज्जः कज्जलकालिमा त्रिजगतीलीलावतीनेत्रयो-
र्यद्देहद्युतिपानविह्वदसावद्यापि विद्योतते ॥ ३ ॥

परमपदपुराग्रद्वारभूतो विभूत्यै
स भवतु भवभाजां पार्श्वनाथो जिनेन्दुः।
यदुपरि परिणामं तोरणस्रग्दलानां
कलयति महहेतुर्भोगिनेतुः फणाली ॥ ४ ॥

छद्मोत्सेकितनीरभीरभिनभोगर्भं सगर्भीकृत-
च्छायस्य च्छविभिः सुरस्य शिरसि स्वर्णद्युतिः शैशवे।
वीक्ष्यैव क्षणतः प्रदक्षिणविधिप्रह्वेषु वैमानिक-
प्राग्भारेषु सुपर्वपर्वततुलां वीरः श्रयन्वः श्रिये ॥ ५ ॥

पुण्यैकहेतुं रसिनीरजन्मप्रभापट्ट रूपचितप्रभावैः।
श्रीवर्द्धमानस्य जिनेश्वरस्य वाचं क्रमौ वक्रमपि स्मरामि ॥ ६ ॥

लीलासञ्चरणं च नूपुररणत्कारश्रियं च स्वयं
बोद्धुं साधु निषेव्यते खगकुलोत्तंसेन हंसेन या।
किञ्जल्कग्रसनप्रसक्तमनसस्तस्यैव हेतोः करे
कुर्वाणा कमलं सदा भवतु सा ब्राह्मी परब्रह्मणे ॥ ७ ॥

जीयासुः कवयो नवोत्तमगुणग्रामाभिरामश्रियः
सर्वे शास्त्रतरङ्गिणीपरिवृढोल्लासैकचन्द्रोदयाः ।
येषां कीर्त्तिरुदारवैभवभवत्प्रौढप्रबन्धावली-
कल्लोला भुवनेषु पञ्चमपयोराशिश्रियं गाहते ॥ ८ ॥

राजा श्रीवनराज इत्यभिधया चापोत्कटः कोऽप्यभू-
द्गोत्रेण क्रियया च कश्चन वनाद्वीरः समभ्युत्थितः ।
सूर्येणापि जितेन यस्य महसा बाल्येऽपि दोला-
तरुच्छाया नाम न नामिता दिशि दिशि क्रोधारुणं धावता ॥ ९ ॥

सूर्याचन्द्रमसौ कदाप्युदयतश्चेत्पश्चिमायां ततो
राज्यं स्यादिह सन्धयेति सुतया देशं समुद्राहयन् ।
येनास्यां दिशि वर्द्धमानमहसा राज्ञा च शूरेण च
प्रासेनाभ्युदयं महोदयपतिः पूर्णप्रतिज्ञः कृतः ॥ १० ॥

भूषा भुवोऽणहिलपाटकनामधेया
येन व्यधायि किल गूर्जरराजधानी ।
यत्रोदयन्नवनवाद्भुतभोगभाग्य-
श्रीणां नृणां बहुतृणं त्रिदशौकसोऽपि ॥ ११ ॥

एकाऽपि प्रमदा मदालसवपुर्यत्र प्रपापालिका
बिभ्राणा करकैरवेण करकं पूर्णं जलैरुज्ज्वलैः ।
रत्नस्तम्भभवन्निजप्रतिकृतिप्रान्ते कृतप्राञ्जलीन्
यूनो वीक्ष्य मृदुस्मितेन तनुते लज्जाविलक्षस्थितीन् ॥ १२ ॥

अस्मिन्नुन्नतवेश्ममौलिषु भवान् भावी सखेदः सखे
चक्रप्रस्खलनाकुलीकृतरथस्तस्मादितो गम्यताम् ।
भिन्नान्तस्तमसः सुवर्णकलशाश्चैत्यालिचूलाजुषः
सञ्ज्ञां चक्रुरधीरकेतनकरैर्यत्रेति मित्रं प्रति ॥ १३ ॥

स्फूर्जद्गूर्जरमण्डलावनिवधूवक्त्रोपमेऽस्मिन्पुरे
चैत्ये किञ्च विशेषकं व्यरचयत्पञ्चासराह्वं नृपः ।
यस्योच्चैःकलशश्चकास्ति रुचिभिः किञ्चिद्विभिन्नाम्बर-
श्यामत्वव्यपदेशकेशपदवीसीमन्तसीमामणिः ॥ १४ ॥

धात्रीधुरीणभुजनिर्जितभोगिराजः
श्रीयोगराज इति भूरमणस्ततोऽभूत् ।
यस्य प्रतापतरणिस्तरवारिमेघ-
सूर्त्यन्तरेण नवकीर्त्तिजलं ववर्ष ॥ १५ ॥

आसीदीशो दोष्मदादित्यरत्नादित्यो रत्नादित्य इत्यस्य पट्टे ।
तीव्रं तेजो वह्निमह्नाय यस्याऽवर्षत्खड्गः शत्रुसंवर्त्तकाब्दः ॥ १६ ॥

जातः करीन्द्रोद्धुरवैरिसिंहः श्रीवैरिसिंहस्तदिलाविलासी ।
यत्कीर्तिकुल्या स्तुतिकैतवेन चिक्रीड लोकाननकाननेषु ॥ १७ ॥

श्रीक्षेमराज इति तद्विरराज राजा येनोद्धृतेऽपि भुवने कृश एव शेषः ।
विस्मृत्य नृत्यदुरगीभरगीयमानतत्कीर्त्तिपानरसिको रसनं सुधायाः ॥ १८ ॥

राजा चामुण्डराजस्तद्भूमण्डलमण्डयत् ।
ससर्प विश्वे यस्याज्ञा नरेन्द्रैरप्यलङ्घिता ॥ १९ ॥

आहडस्तदजनि क्षितिनेता यस्य बाहुरिह नूतनराहुः ।
एककालगिलितौ रिपुतेजःकीर्त्तिसूर्यशशिनौ न मुमोच ॥ २० ॥

नम्रारीन्दुमुखीमुखेन्दुविजयस्मेरक्ष्माम्भोरुहः
श्रीभूमिर्भुवनैकभूषणमभूत्पल्लूविभुर्भूभटः ।
यत्कीर्त्तिर्गगनेऽपि पुष्पनिकरः स्वर्गेऽपि दुग्धोदधिः
क्ष्माखण्डेऽपि हरस्मितं विलसति श्वभ्रेऽपि चन्द्रप्रभा ॥२१॥

पीनश्रीर्भुजपन्नगोऽजनि यशोवार्द्धिर्जजृम्भे मुहुः
कम्पं खड्गलता ततान परितो जज्वाल तेजोऽनलः ।
यस्य क्षुण्णविपक्षवर्गवनितानिश्वासवातोर्मिभि-
र्जन्तुः केतुचलाप्यभूदविचला चित्रं जयश्रीरसौ ॥ २२ ॥

स्वस्रीयः श्रयति स्म तस्य पदवीं चौलुक्यलक्ष्मीशिरो-
माणिक्यं हिमवद्विजिष्णुमहिमा श्रीमूलराजो नृपः ।
रेजे यस्य तमोरिपुस्त्रिपुरुषप्रासादकेतुच्छला-
दाकाशेऽपि विकासिकाशविशदा कीर्त्तिस्त्रिमार्गा नदी ॥२३ ॥

स्वक्रीतसिन्धुपतिलक्षसमुद्धतश्री-
कोटिर्यदीयतरवारिरवारितौजाः ।
कीर्त्त्याऽहसद्दिवि हरिं सुरदैत्यशेष-
क्षुब्धैकसिन्धुकलितैकमसिश्रियं तम् ॥ २४ ॥

तेजःस्फूर्जितदीपदीपिनि सुधाशोभैर्यशोभिः शुभे
विश्वच्छद्मनि वाससद्मनि वशी भूमिं भुनक्ति स्म यः ।
शत्रुस्त्रीनयनोदबिन्दुजतृणस्तोमेन रोमाञ्चितां
सेनाभिः परिकम्पिनीं परिवृढो वोढा नवोढामिव ॥ २५ ॥
पाण्ड्यः पाखण्डिवेषं वहति न वहति भ्रातसम्पातभीरुः
कीरः कर्णाटवीरस्त्यजति रणभुवं व्याकुलो मालवेन्द्रः ।
वाच्यं किञ्चिन्न काञ्चीश्वरचरितमसावातुरः कस्तुरुष्कः
क्ष्माचक्राक्रान्तिभीमे प्रसरति सततं यत्प्रतापप्रभावे ॥ २६ ॥
भेजे तेजो गगनगहने यस्य पिङ्गस्फुलिङ्ग-
भ्रान्तिं बालारुणमणिरुचं प्राप कोऽस्त्यङ्गनायाम् ।
ईशो भासामपि दिवि दिवा किञ्च खद्योतपोत-
च्छायामायात्प्रतिनृपतिघटादुर्यशोदुर्दिनेषु ॥ २७ ॥
युद्धोड्डामरमण्डलाग्रदलितोद्दण्डारिमुण्डोद्धृतिः
क्रीडाखण्डितकाण्डमण्डपसुरप्रत्यक्षदोर्डम्बरः ।
चण्डांशुद्युतिचण्डिमा तदभवच्चामुण्डराजः क्ष्मा-
जानिर्यस्य विभात्यखण्डविभुतापाखण्डमाखण्डलः ॥ २८ ॥
रोदः क्षीरोदनीरैरखिलदिगबलानव्यनिर्धूतचीरै-
र्दिङ्नागस्फारहारैरमरपतिपुरक्रोडपुष्पोपहारैः ।
क्षोणी चन्द्राश्मशालैरपि भुजगजगच्चन्द्रिकाचक्रवालैः
फुल्लत्काशप्रकाशैस्त्रिभुवनमभितो भाति यत्कीर्त्तिहासैः॥२९॥
मेरुश्चेत्परिकम्पते जलपतेर्मुञ्चन्ति चेद्वीचयो
मर्यादां द्युतिमर्यमा त्यजति चेदुर्वी दिवं याति चेत् ।
तद्भज्येत परैरसाविति सतां सन्धां मुधा यो व्यधात्
सङ्ख्यक्षोभविघूर्णितावनिरजःक्लृप्तेऽपि तत्तादृशे ॥ ३० ॥
खेलत्खड्गषडङ्घ्रिवेल्लितभुजावल्लिर्भुवो वल्लभः
श्रीमान्वल्लभराज इत्यजनि तद्यत्तेजसा ताडितम् ।
शीतं स्फीतमभूत्तमश्च जगतः प्रत्यर्थिसार्थैर्गतं
नेदं चेदिह कम्पकालिमगुणौ कस्मादकस्मादिमौ ॥ ३१ ॥
श्वभ्रं सिन्धुरभुग्नया वसुधया भूमिं भटौघैर्दिवं
ससिक्षिप्तरजोभरेण पिदधे सोऽयं जगज्झम्पनः ।

यः श्रीमालवभूपभालफलकप्रस्वेदबिन्दुच्छल-
प्रत्यग्रप्रथितप्रशस्तिविकसद्दोर्विक्रमोपक्रमः ॥ ३२ ॥
तस्मान्नेत्रसुधाञ्जनः समजनि श्रीदुर्लभो मल्लिका-
फुल्लोत्फुल्लयशा विशामधिपतिर्जीमूतपूतोन्नतिः ।
येनोच्चैस्तरवारिवारितपरक्ष्माभृत्प्रतापाग्निना
विश्वाश्वासकरेण सूरमहसामन्तर्दधे मण्डलम् ॥ ३३ ॥
कराम्भोजं भेजे सततविततं यस्य कमला
प्रियारागादागादनु दनुजभेत्ता स्वयमसिः ।
यशःसूनुर्नूनं तदजनि तयोरग्रजकथा-
सदर्पः कन्दर्पद्विषमपि रुषाऽधो व्यधित यः ॥ ३४ ॥
तस्माद्भस्मीकृतरिपुनृपः क्ष्मापतिः शौर्यसीमा
भीमः श्रीमानजनि यजनैर्यस्य नश्यत्तमोभिः ।
प्रासास्तृप्तिं दिवि दिविषदो नेन्दुमास्वादयन्ते
लोकः शङ्कामिति समतनोत्कीर्त्तिभिर्विप्रलब्धः ॥ ३५ ॥
यत्रारिक्षत्रगोत्रक्षयकरणरणाद्वैतवैतण्डिकेऽपि
क्ष्मापालाः क्रुद्धकालादिव निरगुरसेर्यत्प्रसादेन वेगात् ।
तावद्दीनप्रदेहाः करपरिमलनैर्मानयन्तो नयन्तो
मूर्ध्नोऽप्यूर्ध्वं लघीयस्त्रिदशगृहगुहागर्भगुप्ताः प्रसुप्ताः ॥ ३६ ॥
सेवालन्ति पयःसमुद्रति दिशामन्तेषु मध्येनभः
सारङ्गन्ति शशाङ्कति द्युभुवने दानन्ति दन्तीन्द्रति ।
पुष्पस्तोमति षट्पदन्त्यनुलताखण्डं सुधाकुण्डति
श्वभ्रान्तर्भुजगन्ति यस्य यशसि प्रत्यर्थिदुष्कीर्त्तयः ॥ ३७ ॥
तत्कामश्रीरजनि जगतीकामुकः कर्णदेवः
किं वर्ण्यन्ते सुकृतसुकृता यस्य शुद्धान्तवध्वः ।
अस्वप्नीभिर्मनुजसुदृशो बहुमन्यन्त धन्य-
म्मन्या ध्यानव्यसनजनितस्वप्नयद्भोगभाजः ॥ ३८ ॥
कान्तं यं वीक्ष्य यान्तं प्रणयमयरुषा स्वप्नलब्धं प्रबुद्धा-
स्तद्बुद्ध्या न्यस्तहस्ता लिखितरतिपतेरञ्चले चञ्चलाक्ष्यः ।
मूर्च्छालाश्चित्रशालाभुवि भवति विभुर्नायमित्यस्तहस्ता-
स्तत्ता हन्ति स्म मूर्त्तः स्वपरिभवभवन्मानभूमिर्मनोभूः ॥ ३९ ॥

कान्ते कृष्णेऽभिभूते जगदवनपुषा बाहुना विग्रहेण
क्षिप्ते सूनावनङ्गे पितरि जलपतौ निर्जिते सैन्यपूरैः।
बन्धौ दोषाकरे तु प्रथममपि मुखालोकभग्नप्रभावे
लक्ष्म्यास्तेनेह तेने हरणमुरुयशोदौत्यदत्तस्पृहायाः ॥ ४० ॥

मौक्तिकद्युतिजलोज्ज्वलमन्तर्मूर्ध्नि कुम्भयुगलं कलयद्भिः।
योऽवरोधविधुरैर्मिलिताङ्गैर्वैरिभिः करिकुलैश्च सिषेवे ॥ ४१ ॥

अर्थिव्यर्थितदुःस्थदुर्विधिलिपिर्द्विट्कुम्भिकुम्भच्छिदा-
सिंहः श्रीजयसिंहदेवनृपतिः श्रीवेश्म तस्मादभूत्।
सङ्ख्यासङ्ख्यहलावनीधवनवस्वर्वासिसन्तुष्टये
चक्रे यः क्रतुचक्रवालमवनीशक्रो न शक्रश्रिये ॥ ४२ ॥

पद्मा पद्ममपास्य पङ्कजनितं यस्यारिकेशावली-
रोलम्बप्रविरोलदङ्गुलिदलं भेजे कराम्भोरुहम्।
शेषं वायुवशं विसृज्य सबलं दोर्नागमागादसिः
कृष्णोऽपि प्रियमेलकाभिधमभूत्तत्तीर्थमेतद्भुजः ॥ ४३ ॥

न्यस्यावश्यं शिरसि विरसं क्रन्दतां पादमेषां
राज्यं ग्राह्यं द्रुतमिति रणे यः प्रतिज्ञां प्रतेने।
एतत्पादोपरि तु परितः स्वं परिन्यस्य मौलिं
प्रीतेरन्तः प्रतिनृपतिभिः प्रत्युत प्रापि लक्ष्मीः ॥ ४४ ॥

वाजभ्राजितवाजिराजिचरणक्षुण्णक्ष्मामण्डल-
प्रोद्यत्क्षोदकदम्बडम्बरपरिच्छन्नाम्बरे सङ्गरे।
यत्कौक्षेयकदण्डखण्डितरिपुक्ष्मापालमालावृति-
व्यासक्ता न परं पुरन्दरपुरीनार्यः स्वकार्यक्षमाः ॥ ४५ ॥

शोषः सैष जवाद्यशोजलनिधौ शान्तिः प्रतापानले
शत्रूणां शिरसि च्युतेऽपि हसितं नृत्तं कबन्धेष्वपि।
सत्यं सङ्गरसङ्गरस्य महिमा सोत्साहमन्त्रस्थिते-
र्यस्योच्चैः करवाल एव स कथं सिद्धो न सिद्धाधिपः ॥ ४६ ॥

विडौजसि गते भयादनिबिडौजसि स्वर्गिरिं
तदीयदिशि यः स्फुरन्निह महायशःक्ष्मारुहौ।

अरोपयदहो पयःपतितटेऽधुनाप्यन्वहं
ततोऽभ्युदयतो नवौ रविनिशाधवौ पल्लवौ ॥ ४७ ॥
रक्ष्यां रक्षितुमक्षमे दिशमपि श्यामे सदुःखे यमे
यद्भृत्यैरभिभूतदक्षिणककुब्भागैर्द्विषो भाविभिः ।
मा स्म द्राक्ष्महि दुःसहैरिति नताः पाराय वारांनिधे-
र्भेजुः सेतुभुवं ततः कपिभयाच्चुक्षोभ रक्षोभरः ॥ ४८ ॥
विलुप्ताशः पाशं निजतनुविनाशाय वरुणः
शुचा भेजे बिभ्रत्यपरहरितो यस्य च यशः ।
किमन्यच्चन्द्रार्काविह दिशि गतौ यस्य च यशः-
प्रतापाभ्यामम्भःपतिपयसि दीनौ निपततः ॥ ४९ ॥
यस्मिन्नुत्तरदिग्गते बलचलच्चूर्णावलीभिः स्थली-
भूवं मेति नदीपतिर्द्रुतभयं मेरोः परेणागमत् ।
तेने किञ्च निकेतनं धनपतिः कैलासशैले सुख-
श्राद्धम्मन्यमना मनागपि न चामुञ्चत्तटं शूलिनः ॥ ५० ॥
तेजोवह्निहुताष्टदिग्नृपसमिद्यज्ज्ञानयूपोपमै-
र्नैदक्षोऽपि पतिः क्षितेरिति दिशामूर्ध्वाङ्गुलीसन्निभैः ।
आलानप्रतिमैर्दिगीशकरिणां दिग्मण्डपोत्तम्भन-
स्तम्भस्तोमनिभैश्च यस्य विजयस्तम्भैर्दिगन्ता बभुः ॥ ५१ ॥
शङ्खं शार्ङ्गधरस्य शेखरमणिं शूलायुधस्य द्विपं
वज्रास्त्रस्य रदं परश्वदभृतः स्वर्लोकलीलाजये ।
उत्कर्षार्थतया विलम्पतु भटो विश्वैकधामा यशो-
नामा यस्य हहा जहार तु कुतो युग्यं जरद्ब्रह्मणः ॥ ५२ ॥
अस्य त्रिक्रमविक्रमस्य न मुदे श्लाघा जगज्जाङ्घिकी-
लङ्घ्यानामपिकष्टमष्टककुभां जेतायमेतावती ।
क्षोणीकम्पिनि धूतधूलिनि बले यस्याहिविश्वेश्वरः
शेषो नाम ननाम धाम मुमुचे भानुर्नभोभूषणम् ॥ ५३ ॥
क्रान्तशक्रबलो भग्नभोगिलोकः क्षितिं जयन् ।
येन बर्बरदैत्येन्द्रः पुरीपरिसरे हतः ॥ ५४ ॥
हृष्टोऽभून्मुशलध्वजः स्वकुशलध्यानेन जिष्णुः स्मय-
भ्राजिष्णुर्मुदितः समुद्रशयनो रुद्रोऽपि मुद्रामुदा ।

उत्क्षिप्ते किल बर्बरस्य शिरसि क्रूरस्य विश्वत्रयी-
जेतुर्येन तदा विधुन्तुदधिया भीतस्तु शीतद्युतिः ॥ ५५ ॥

सञ्जज्ञे नृपतिशतैः कृताङ्घ्रिसेवः क्ष्मापालस्तदनु कुमारपालदेवः ।
निर्वीराविभवमुचापि येन मुष्टा निर्वीरा रिपुवसुधा नितान्तपुष्टा ॥५६॥

सैन्यप्रकम्पितधराविधुरात्मकेषु पोतैरलङ्घ्यसलिलेषु धुनीधवेषु ।
श्रीजैनचैत्यरचनेन शिलोच्चयेषु यस्याजनिष्ट चरणः शरणं रिपूणाम् ॥५७॥

यस्य सद्मनि सदा हयहेतोः खाद्यमुद्गवलयं दलयद्भिः ।
सिच्यते सुचिरसञ्चितशोकैर्वैरिभिर्नयनवारिभिरेव ॥ ५८ ॥

दास्यवर्त्तिन इवास्य समुत्थश्वासनाशिततृणास्तु विपक्षाः ।
प्रातराशु सलिलेन यदीयद्वारभूमिषु रजः स्थगयन्ति ॥ ५९ ॥

अग्रे हम्मीरवीरश्चिरमजिरमहीपादपः पादपद्म-
क्रीडाभृङ्गः कलिङ्गः सदलवदनगो मेदपाटः कपाटः ।
अन्ध्रः कर्णाटलाटौ कुरुमरुमुरलावङ्गगौडाङ्गचौडाः
क्रोडस्तम्भाः सभायामिति नृपतिकुलैराकुलैरावृतो यः ॥ ६० ॥

कथ्यन्ते न महीभृतः कति महीयांसो महीशेश्वरा
माहात्म्यं स्तुमहे तु हेतुनिगमादेतस्य चेतोहरम् ।
मर्यादामतिलङ्घयन् रसलसद्यद्वाहिनीवाहितो
ऽर्णोराजः स जगाम जाङ्गलमहीभागेषु भग्नोन्नतिः ॥ ६१ ॥

दर्शं दर्शमसह्यदर्शनकचं कल्पान्तशिल्पान्तक-
प्रक्रीडद्रसनासनाभिमभितो यत्खड्गखेलां युधि ।
वित्रस्तस्य चमूचरैः सह तथा प्राग्विश्वलक्ष्मा भुजः
प्रस्वेदाम्बु जगाल जाङ्गलभुवोऽभूवन्ननूपा यथा ॥ ६२ ॥

क्षीणत्वं दाक्षिणात्या व्यरचयदमुचन्मालवी बालवीक्षा-
दुःखादश्रूणि हूणी शुचमधित दधौ जाङ्गली नाङ्गलीलाम् ।
कुब्जाऽऽसीत्कन्यकुब्जा शिरसि सुतभरात्कौङ्कणी कङ्कणानां
वृन्दं खेदाद्विभेदावनिभृति चलिते यात्रया यत्र जैत्रे ॥ ६३ ॥

कोदण्डं स्वकरे कुरुर्न कुरुते सज्जं गलज्जङ्गल-
स्त्रस्तो वेत्ति नितम्बतो न वसनं कीरो न वीरोचितः ।
युद्धक्षोणिषु दक्षिणः क्षितिपतिर्न क्षोददक्षोदय-
द्राङ्मृत्युसहस्रचक्षुषि मुहुर्यस्मिन् धनुर्ध्वन्वति ॥ ६४ ॥

जगद्वन्द्यस्मन्यः प्रबलजलदुर्गार्जनमयै-
र्यदीयैरुद्यद्भिर्बलपरिवृढैः पौरुषदृढैः ।
हयोत्खातक्षोणीविततरजसा सिन्धुपरिखां
स्थलीकृत्य क्रीडासमिति शमितः कौङ्कणपतिः ॥ ६५ ॥
पदं विजयसरूपदामजयपालदेवोऽखिल-
द्विषन्नृपतिमृत्युभूरथ बभूव भूवल्लभः ।
रराज सुरराजवज्जगति यस्तनूडिम्बित-
प्रियाचयविलोचनाम्बुजसहस्रनेत्राश्रितः ॥ ६६ ॥
यस्मिन्पश्यति वेश्मनोऽङ्गणभुवि भ्रान्तेऽपि मत्तद्विपे
नेशुर्नाशु नृपा व्यवायरुचयः सेवामयव्रीडया ।
शोकश्यामतमाननिमानपि पुनः प्रेक्ष्य द्विषो नापिबत्
दग्धक्ष्मारुहखण्डखण्डनविधौ कुर्वन्नवज्ञामिव ॥ ६७ ॥
आजन्मत्रासहेतुश्रमसमदहृदः कण्टकाः कण्टकद्रु-
द्रोणीचीत्कृत्त्वचोऽपि स्खलदुपलशिलाभोगसुभ्राङ्घ्रयोऽपि ।
अङ्गुष्ठं नर्त्तयित्वा भृतपदमभवन्यस्य सेनाभटानां
निःस्वानध्वानजैत्रत्वरतुरगभृतां पश्यतामध्वदृश्याः ॥ ६८ ॥
तमहतमहं वद्धा बध्वा समं न समानये
यदि तदवनीनेता नेति प्रणीतरणो रिपुः ।
किमपि न पुनः कर्तुं भर्तुः स यस्य शशाक त-
न्नियतममुचत्प्राज्यं राज्यं सतामचलं वचः ॥ ६९ ॥
मूलं कीर्त्तिलताततेः समजनि श्रीमूलराजो नृप-
स्तत्पट्टे करकेलिकन्दुककलक्ष्मापालको बालकः ।
यस्मै दण्डमखण्डहर्षकृतये हम्मीरभूमीरुह-
प्रस्वेदप्रभवं समर्पितवती मातेव कौतूहलात् ॥ ७० ॥
सन्तापं यत्प्रतापस्य तुरुष्कैरसहिष्णुभिः ।
आपादमस्तकं चक्रे ध्रुवं वासोऽवगुण्ठनम् ॥ ७१ ॥
रिपुस्त्रीनेत्राम्भोधरयनदीमातृकयशा
विशामीशो भीमः समभवदुदात्तस्तदनुजः ।
अलब्धार्थिस्तोमः पुरनृषु विभक्तार्थिषु फल-
प्रदेषु प्रद्वेषं विरचयति दानैकरसिकः ॥ ७२ ॥

संलीनानामनुतटवनं तीरविश्रान्तनीर-
स्त्रीतुल्यानां यदरिसुदृशां दिक्षु रेजुर्मुखानि ।
उत्कल्लोलः सह बहुविधैरेव रत्नाकरोऽयं
रात्रौ रत्नान्यतनुत बहिः सोमनामानि मन्ये ॥ ७३ ॥

धाम्नां धाम कुमारपालधरिणीपालप्रसादास्पदं
चौलुक्यो धवलाङ्गभूर्गुरुमतिः श्रीभीमपल्लीपतिः ।
अर्णोराजनृपो न्यधत्त नृपतिं मामेतदीयः पिता
मत्त्वैवं लवणप्रसादनृपतौ क्ष्माभारमेष व्यधात् ॥ ७४ ॥

यत्खड्गदण्डयमुनाम्भसि मेदपाट-
चन्द्रावतीपुरपती त्रिदिवाय मग्नौ ।
चक्राम चक्रमवनेरथ पूर्णमर्णो-
राजस्य तस्य तनयो लवणप्रसादः ॥ ७५ ॥

धारारण्यविलङ्घनैरतिघनै रीणाप्यरीणामहो
राजिर्वाजिविजित्वरत्वरगतिर्वित्रस्य यस्याहवे ।
स्वामात्यक्रमकर्ममर्मरखानाकर्णयन्ती गता
प्राणत्राणवनावनावपि भिया मिश्रा न विश्राम्यति ॥ ७६ ॥

कोपाग्निज्वलितास्तटस्थबलवत्फूत्कारविस्फारिता
निर्भग्नाश्चरणेन काचकुतपप्राया निकाया द्विषाम् ।
तद्दुष्कीर्त्तिमिषद्रवन्नवमषीचक्रेण चक्रेऽम्बरं
श्यामं यस्य यशःपयोभिरभितः प्रक्षालितं निर्मलैः ॥ ७७ ॥

किं वर्ण्यो लवणप्रसादनृपतिः पाणौ कृपाणच्छलं
कालं बालमहो महोभरजितादादाय शूरादपि ।
यो मुष्टिग्रहलालितं प्रतिपदं कोपारुणः कम्पयन्
दिग्नेता रिपुमुण्डमोदकचयैरुच्चैरुचं नीतवान् ॥ ७८ ॥

नताशेषद्वेषिक्षितिपकृतपूजः प्रतिपदं
तनूजस्तस्यास्ते भुजगजगदीशद्युतियशाः ।
अधीशो धीराणां धवलकुलधौरेयधवलः
श्रियां सौधं धीमान् धवलचरितो वीरधवलः ॥ ७९ ॥

देशोऽरण्यप्रदेशो नगरमगरसा कन्दरा मन्दिराली
तूली धूलीनिवेशस्तृणभृतकबरीधानमेवोपधानम् ।

कायच्छायाऽनुगस्त्री प्रतिदिनमशनं कन्दमूलं दुकूलं
वल्कं दारिद्र्यकल्कं सचिव इति शुचिर्यद्विषां राज्यलक्ष्मीः॥८०॥

न किं स हरितुल्यतास्तुतिषु लज्जते यज्जितै-
ररातिनिवहैर्महागिरिगुहागृहैकस्पृहैः।
विजित्य मृगवैरिणो निजपुरे नियुक्ताः स्वयं
गृहोपवनभूरुहां विरचयन्ति रक्षां किल ॥ ८१ ॥

दूरं दुर्ललितेन यस्य महसा शङ्केऽम्बरं त्याजिता
कीर्त्तिर्वीरमहीभृतां नव मषद्वैलक्ष्यकृष्णच्छविः।
गूढक्ष्माधरकुञ्जपुञ्जसदनोत्सङ्गे तमश्छद्मना
चक्रे नाशविनाशमेव रुदतीबाष्पोपमैर्निर्झरैः ॥ ८२ ॥

अन्तर्व्योमस्रवन्तीमधुरमधु विधुच्छद्मशुभ्रच्छदं दिक्-
पत्रं नक्षत्रलक्षच्छलजलकणिकं भानुमद्भापरागम्।
भ्रान्तध्वान्तद्विरेफव्रजमजरगिरिव्याजकिञ्जल्कमेत-
ल्लीलां नीलाम्बुजस्य श्रयति वियदहो यद्यशस्तोयराशौ ॥८३॥

अप्राप्तताद्दशगुणां युवतिं नितम्ब-
स्तम्बस्तनस्तबकभारभृतोऽहसन् याः।
प्राप्तासु यस्य पृतनासु पुरे रिपूणां
तास्त्रासकाललसिता हसितास्तथाऽपि ॥ ८४ ॥

प्रतिदिनमपि रौद्रैर्यस्य तप्तः प्रतापै-
रिति समिति समेतः सम्प्रविष्टोऽसिदण्डे।
जिगमिषुररिवर्गः स्वर्गमग्रे तडागं
हिममयमिव मेने भानुमानन्दमग्नः ॥ ८५ ॥

यस्य न्यञ्चितचापचापलचलन्नाराचवीचीचय-
व्यस्तत्रस्तसमस्तसैनिकजनव्यालोकशोकाकुलाः।
खेदस्वेदमयं पयःकणगणं भाले दधुर्भीरुषु
व्यक्तं मौक्तिकपट्टबन्धनमिव प्रत्यर्थिपृथ्वीभुजः ॥ ८६ ॥

क्रुद्धे युद्धेषु यस्मिन् रिपुनृपनिकरः केशवव्योमकेश-
ब्रह्मादीनां पदाब्जैरपि मनसि धृतै रक्षितो न क्षतेभ्यः।
रक्षन्नात्मानमात्मक्रमकमलयुगप्राप्तवेगप्रसादा-
देताभ्यो देवताभ्यः कथमिव भुवने नाधिकोऽभूत्प्रभावैः ॥८७॥

यत्खड्गक्षतकुम्भिकुम्भविगलत्कीलालकल्लोलिनी-
पङ्क्तिर्ध्वस्तयशोमहीरुहमहो निर्मूलयन्ती छिषाम् ।
तेषामेवमहोदवानलभरं शान्तिं नयन्ती ययौ
मुक्तामण्डलमण्डिताम्बुधिमगात्तेनैव रत्नाकरः ॥ ८८ ॥

यद्दोर्मण्डलकुण्डलीकृतधनुःप्रोड्डीनकाण्डावलि-
न्याससन्नासपराः परं प्रियतमा नेशुर्द्विषां वक्षसः ।
तासामप्युरसो रसोत्तरलसद्दुःखातुराणामयं
कन्दर्पः करकोटिकुट्टनदराद्दूरेण तूर्णं ययौ ॥ ८९ ॥

प्रत्याकारच्छलगुरुदरीनिःसृतः श्यामकान्तिः
सर्पन्सर्पश्रियमकलयद्यस्य पाणौ कृपाणः ।
यं व्यालोक्य प्रसृमरयशोराशिनिर्मोकभाजं
द्वेषिक्षोणीपरिवृढमहोदीपकः प्राप शान्तिम् ॥ ९० ॥

युद्धपर्वणि कदापि न दृष्टं यस्य पृष्ठमसुहृन्निकुरम्बैः ।
सप्रतिज्ञमिव वीक्षितुमुच्चैस्तैश्चिरादनुचरत्वमभाजि ॥ ९१ ॥

कुण्डलप्रतिमितस्वभुजाभ्यां यश्चतुर्भुज इव प्रतिभाति ।
चारुचक्रमनुबन्धि दधानो बाणयुद्धजितकामविपक्षः ॥ ९२ ॥

यत्पदाम्बुजयुगं रणधूलीधूसरं चिकुरमार्जनिकाभिः ।
मार्जयन्ति विनता रिपुनार्यः श्रीनिकेतमिव हस्तधृताभिः ॥ ९३ ॥

यद्दानप्रभवप्रभूतकनकप्राग्भारसारस्फुर-
न्नेपथ्यप्रचयं प्रकम्पितरुचः प्रेक्ष्य द्विजातिप्रियाः ।
विन्ध्योल्लासभयाद्घटोद्भवमुनेर्योग्योऽप्युपेतो न य-
ल्लोपामुद्रिकया तिरस्कृतिगिरा तस्मादुपालभ्यते ॥ ९४ ॥

यस्मिन्दाननिदानकाञ्चनचयस्मेरस्करे कर्णिको-
त्तालस्तालदलं न वाञ्छति जनः प्राणप्रियाप्रीतये ।
तस्मान्मूलपथेऽखिले फलगलन्मैरेयसिक्तोल्लस-
त्तृष्णाभिस्तृणराज एव समभूत्तथ्याभिधानस्ततः ॥ ९५ ॥

भ्रूभङ्गिप्रतिबिम्बतोरणदलं प्रौढप्रतापोच्छल-
त्प्रोद्यद्दीपमदभ्रशुभ्रयशसा लिप्तं सुधास्पर्द्धिना ।
पद्मासद्म विभाति वीरधवलक्षोणीशखड्गं पुरो
युद्धकुद्धविरोधिरोधिपरिखाविस्फारधाराजलम् ॥ ९६ ॥

उपार्जि विभुताऽद्भुता वसुमती च नीता वशं
क्व सम्प्रति महामतौ धृतभरे भवेयं सुखी ।
अनेन गदितैरिति स्फुटसभाजनैर्भोजनैः
श्रियामिति सभाजनैः शुचिविचारमूचे वचः ॥ ९७ ॥

वंशोऽयं प्रथितोन्नतिः प्रभवति प्राग्वाट इत्याह्वया
पुण्यः पुण्यसुधारसेन शुचिना सोद्रेकसेकक्रियः ।
दिव्याम्बरलम्बिनीं सुचरितप्रासादमासादयन्
कीर्त्तिं केतनकौतुकेन तनुते यः स्वर्धुनीस्पर्द्धिनीम् ॥ ९८ ॥

अच्छिद्रो यदि तत्कृतो गुरुगुणश्चेन्निर्जलस्तत्कुत-
स्तेजस्वी यदि धीमतां हृदि गतश्चूडामणिश्चेत्कुतः ।
वंशेऽस्मिन्नजनिष्ट विष्टपचमत्कारीति कीर्त्तिप्रभा-
शुभ्रो मौक्तिकरत्नवन्नवनवश्रीमण्डितश्चण्डपः ॥ ९९ ॥

चण्डप्रसाद इति तस्य सुतस्ततोऽभू-
द्यत्कीर्त्तिभिर्धवलितेऽम्बरभित्तिभागे ।
लीलां ललौ लिपिरथस्य रथाङ्गबन्धोः
क्रीडारथः प्रकटमेकरथाङ्गशोभी ॥ १०० ॥

समजनि जिनसेवानित्यहेवाकवृत्तिः
प्रगुणगुणगणश्रीस्तस्य कान्ता जयश्रीः ।
जगति घनतमोभिः कश्मले मानसान्तः
किल विलसति यस्याः शुद्धहंसो विवेकः ॥ १०१ ॥

माधुर्यधुर्यमधुलोभगुणैकशोभ-
निष्कम्पसम्पदलिनीनलिनीवनश्रीः ।
सूरस्ततस्तनुभवोऽनुभवोपभुक्त-
भाग्यप्रभावविभवो नयभूर्बभूव ॥ १०२ ॥

स श्रीमानुदयाचलोज्ज्वलरुचिर्मैत्र्यं दधानो जने
शूरः क्रूरतमः समुच्चयभिदाशूरः कथं वर्ण्यते ।
अन्योन्यव्यतिषङ्गसङ्गतरुचिव्योमच्छले पल्वले
तेजःकीर्त्तिमिषेण चक्रमिथुनं संयोजयमास यः ॥ १०३ ॥

भ्राता वातायन इव धियां तस्य निःसीमकीर्त्ति-
स्तोमः सोमः समजनि जनालोकनीयः कनीयान् ।

देवो देवेष्विव जिनपतिर्मानसे मानसेका-
यस्यावश्यं नृपतिषु पतिः सिद्धराजो रराज ॥ १०४ ॥
विश्वानन्दकरः सदा गुरुरुचिर्जीमूतपूतोन्नतिः
सोमः कोऽपि पवित्रचित्रविकसद्देवेशधर्मोन्नतिः ।
चक्रे मार्गणपाणिशुक्तिकुहरे यः स्वातिवृष्टिव्रजै-
र्मुक्तैर्मौक्तिकनिर्मलं शुचि यशो दिक्कामिनीभूषणम् ॥ १०५ ॥
एतस्य विकसद्धर्मारामस्याजनि वल्लभा ।
सीता भूतनयाप्येषा न कुशीलवलन्मतिः ॥ १०६ ॥
आशाराज इति व्यराजयदथ क्ष्माखण्डमाखण्डल-
क्रीडासिन्धुरपश्यतोहरयशःस्तोमेन पुत्रस्तयोः ।
श्रीमान्सोमसमुद्भवो निजभवेऽम्भोधौ गिरीशान्गुरू-
न्सेतूकृत्य तिरोदधे स्वकुलजाहङ्कारसुषणयुतः ॥ १०७ ॥
यस्तीर्थानां प्रकरमकरोल्लोकनिर्माणकर्मा-
लङ्कर्मीणो विधिरधिगतः सोऽम्बुजन्माङ्गजन्मा ।
आभ्यामुच्चैस्तदपि विजितं यो विचिन्त्येति चित्ते
भक्तिं धीमानकृत जननीपादयोरादरेण ॥ १०८ ॥
दत्तालोकेऽर्थिलोके सुरसुरभिरिव भ्राजते यस्य वाणी
चेतोवृत्तिश्च चिन्तामणिरिव फलदः कल्पशाखीव पाणिः ।
स्तुत्योऽसौ कस्य न स्यादमरगिरिसमः सूरसोमप्रसर्प-
त्तेजःपुञ्जामितश्रीर्लसितसितयशोदम्भजम्भारिकुम्भी ॥ १०९ ॥
तस्य प्रिया मुदमधत्त पिनाकपाणेर्देवी कुमारजननीव कुमारदेवी ।
इन्दुः सदा रिपुरजीयत पङ्कजश्रीसर्वस्वदानमुदितेन मुखेन यस्याः ॥११०॥
कान्तस्वान्तसरोवरैकवरला कल्पद्रुकल्पाङ्गज-
श्रेणीनन्दनभूमिरद्भुतमतिक्षीरोदचन्द्रद्युतिः ।
शश्वद्विश्वविनाशतत्परिभवाधःकारभागीरथी
या मुक्ताफलनिर्मलद्युतिगुणाभिव्यक्तिशुक्तिर्बभौ ॥ १११ ॥
चत्वारस्तनया नयाहृतिरसाः कंसारिदोर्विक्रमा
गोदावर्य इवोज्ज्वला दुहितरः सप्त प्रसूतास्तयोः ।
आत्मद्वादशतां यदीयवदनैर्लेभे सुधादीधिति-
र्बद्धस्पर्द्ध इवाखिलार्कखरतोच्छेदाज्जगन्मोदयन् ॥ ११२ ॥

लावण्याङ्ग इति द्युतिव्यतिकरैः सत्याभिधानोऽभवत्
शङ्के शङ्करकोपविभ्रमभरादासीदनङ्गः स्मरः ।
सर्वाङ्गं सुभगोऽयमित्यनिमिषस्त्रैणयेन बाल्ये हृतः
त्यक्त्वा भूवलयं सुरेन्द्रसदसि क्रीडाततिं निर्ममौ ॥ ११३ ॥
मल्लदेव इति देवताधिपश्रीरभूत्तदनुभूर्विभूतिभूः ।
धर्मकर्मधिषणावशो यशोराशिदासितसितद्युतिद्युतिः ॥ ११४ ॥
रक्तः सद्गतिभावभाजि चरणे स्मेरास्यपङ्केरुह-
प्रक्रीडन्परमेष्ठिवाहनतया प्राप्तः प्रतिष्ठां पराम् ।
खेलन्निर्मलमानसेन सभयं क्वापि श्रयन्पङ्किलं
विश्वे राजति राजहंस इव यः संशुद्धपक्षद्वयः ॥ ११५ ॥
आस्ते तस्य सुधारहस्यकवितानिष्ठः कनिष्ठः कृती
बन्धुर्बन्धुरबुद्धिबोधमधुरः श्रीवस्तुपालाभिधः ।
ज्ञानाम्भोरुहकोटरे भ्रमरतां सारङ्गसाम्यं यशः-
सोमे शौरितुलां च यस्य महिमक्षीरोदधौ खं दधौ ॥ ११६ ॥
हस्ताग्रन्यस्तसारस्वतरसरसनप्रासमाहात्म्यलक्ष्मी-
स्तेजःपालस्ततोऽसौ जयति वसुभरैः पूरयन्दक्षिणाशाम् ।
यद्बुद्धिः कल्पितोरुद्विपगहनपरक्षोणिभृद्वृद्धिसम्प-
ल्लोपामुद्राधिपश्च स्फुरति लसदिनस्फारसञ्चारहेतुः ॥ ११७ ॥
तदिमं मौलिषु मौलिं कुरुषे पुरुषेश ! सकलसचिवानाम् ।
क्षितिधव ! तत्तव दोष्णोर्विष्णोरिव भवति विश्रामः ॥ ११८ ॥
श्रुत्वेति मुदितहृदयः पुण्यप्रागल्भ्यलभ्यसभ्यगिरम् ।
अनयोरनयोज्झितयोर्धरणिधवं व्यधित धरणिधवः ॥ ११९ ॥
सोऽयं प्रख्यातकीर्त्तिः सुजनजनमनःपद्मबोध्युष्णधामा
श्रीतेजःपालनामा स्फुरति मतिलतास्थानकल्पद्रुवृक्षः ।
पाठारम्भाय लक्ष्म्या दुहितुरिव दधत्पट्टिकां वर्ण्यवर्णा
मुक्तादम्भेन गम्भीरिमगरिमगुणैर्यः पयोराशिरासीत् ॥ १२० ॥
दिग्यात्रोत्सववीरवीरधवलक्षोणीधवाध्यासितं
प्राज्यं राज्यरथस्य भारमभितः स्कन्धे दधल्लीलया ।
भाति भ्रातरि दक्षिणे समगुणे श्रीवस्तुपालः कथं
न श्लाघ्यः स्वयमश्वराजतनुजः कामं स वामस्थितिः ॥ १२१ ॥

यत्कीर्त्तिप्रसरैः परस्परपरिस्पर्द्धोर्ध्ववर्धिष्णुभि-
दूरं दारितमेतदम्बरमिह भ्रष्टं भुवो मण्डले ।
राशीभावचरिष्णुमीनमकराद्याकीर्णमर्णःपति-
व्याजादञ्जनमञ्जुलच्छवि न कैः प्रत्यक्षमुत्प्रेक्ष्यते ॥ १२२ ॥

नीता वशं विषमवारिगुणेन बाहु-
स्तम्भे धृता कनकशृङ्खलिकाभियोगात् ।
श्रीर्येन सिन्धुरवधूरिव भूरि वर्ष-
दानप्रमोदितघनोदितमार्गणालिः ॥ १२३ ॥

धाम्नि स्वर्धामशैलं प्रियवचसि सुधामानने यामिनीशं
कण्ठे वैकुण्ठशङ्खं भुजशिखरयुगे जम्भजित्कुम्भिकुम्भौ ।
पुण्योत्पन्नस्य यस्य स्वयमसमचमत्कारिरूपस्य पाणौ
प्रत्यक्षं कल्पवृक्षं जगति जनयतश्चातुरी भातु धातुः ॥ १२४ ॥

लावण्यद्रवकूपरूपसुभगे निःशेषचेतस्विना-
मन्तर्वासिनि वाग्वशंवदमधौ राजप्रसादोज्ज्वले ।
एतस्मिन्सुमनोमनोरमगुणैर्विश्वं च विश्वत्रयं
वश्यङ्कुर्वति सोऽपि सम्प्रति पदभ्रष्टो मनोभूरभूत् ॥ १२५ ॥

अम्भोदभ्रमभाजि दुर्जनजने श्यामायमानद्युतौ
तन्वाने भुवनेषु दुस्तमतःस्तोमं कुकीर्त्तिच्छलात् ।
लब्धोच्चभ्रमरामसमार्गणमुखख्यातश्रुतिद्वारत-
स्तूर्णं मानसमानशे सुमनसां हंसोज्ज्वलैर्यद्गुणैः ॥ १२६ ॥

मूलस्थूलहरित्करिस्थिरपदं शुभ्रप्रभं भूमिभृद्-
दम्भस्तम्भभरं नभःसुरसरिद्व्याजध्वजभ्राजिनम् ।
उत्तुङ्गं जगतीतलेऽतुलयशःप्रासादमासाद्य य-
श्चिन्तातीतफलप्रदोऽवनिजने देवोऽस्तु सेवोन्मुखे ॥ १२७ ॥

इन्दुर्बिन्दुरपां सुरेश्वरसरित् डिण्डीरपिण्डः पति-
र्भासां विद्रुमकन्दलो विसु नभः श्रीवत्सलक्ष्मा किल ।
कैलासत्रिदशेभशम्भुहिमवत्प्रायोऽस्तु मुक्ताफल-
स्तोमः कोमलवालुकाऽस्य च यशःक्षीरोदधौ कौमुदी ॥ १२८ ॥

गर्जन्निर्जरकुञ्जरे मुरजिति प्रौढोर्मिभिर्नृत्यति
क्षीराब्धौ कलहंसिकाकलकलैर्गङ्गाजले गायति ।

श्यामाकामुकपारिपार्श्वकयुतो विश्वत्रयीसम्मद-
क्रीडानाटकसूत्रधारपदवीं यत्कीर्त्तिपूरो ययौ ॥ १२९ ॥
उद्भूतप्रतिभाद्भुतस्य मतिमच्चन्द्रस्य चिद्रूपता-
माहात्म्यं स्तुमहे किमस्य निखिलग्रन्थाब्धिमन्थात्मनः ।
दुःस्थानां प्रतिभूभृतीव विदधौ भालस्थलस्थापिता
दृक्पातैर्वितथैव येन कविता कापि त्रिलोकीकवेः ॥ १३० ॥
यत्कीर्त्तेः स्वैरमैरावणमदसमदभ्रान्तभृङ्गालिगीतैः
स्फूर्जद्गर्जालिनादस्फुरदुरुमुरजोल्लासितायाः सितायाः ।
नित्यं नृत्तं सृजन्त्याः शिरसि सुरगिरेश्चारुचारीप्रचार-
स्पष्टभ्रष्टहारावलिगलितमणिभ्रान्तिमायान्ति ताराः ॥ १३१ ॥
अस्मद्गोत्रैकमित्रं त्वमसि निशि शशी क्रीडया पीडयेन्नः
शङ्के पङ्केरुहैः श्रीरिति गदितुमिव प्रीतियुक्ता नियुक्ता ।
तत्प्रास्त्या यस्य नाम्नः कुपित इव करो दानशोभी यशोभि-
र्भृत्यैश्चक्रे तथेन्दुं त्रिजगति स यथा लक्ष्यते नेक्षितोऽपि ॥१३२॥
जाता कृष्णपदात्प्रिया जलनिधेर्दुष्कर्मभिर्निम्नगा
बह्वेवं परिभाव्य यत्किल दधौ झम्पां पुरा वैभवे ।
तन्मन्येऽस्य कराग्रसम्भृतजनिर्भूत्वा गुणश्रेयसी
कीर्त्तिः ख्यातिमवाप्य काप्यभिनवा गङ्गेयमुज्जृम्भते ॥ १३३ ॥
भर्तुर्वेषमयं विधाय कितवः कोऽप्येति मामुन्मना-
स्तेनामुं विजये ! निवारय यतो मे नीलकण्ठः प्रियः ।
जल्पन्तीति सती यदीययशसा शुभ्रीकृते सर्वत-
स्त्रैलोक्येऽपि पिनाकिना सशपथं प्रत्यायिता पार्वती ॥ १३४ ॥
क्षीराब्धिर्लुठति क्षितौ फणिपतिः स्फारस्फुरत्फूत्कृति-
र्गङ्गा निम्नमुखी करोत्यलिवधूलोकैरवंकै रवम् ।
अन्तःसन्ततमङ्कपङ्कमिषतश्चन्द्रोऽपि तद्रोपित-
म्लानिर्दीनिवरस्य यस्य यशसा तूर्णं हृते वैभवैः ॥ १३५ ॥
प्रतीता नीतीनामुपरि परिपाकेन रमते
मतिर्दैवे सेवा सकलकरणैकान्तकरणम् ।
अहो यस्यावश्यं शठरिपुहठप्राणहरणं
रणं दीने दानं सपदि विपदेकक्षयलयः ॥ १३६ ॥

कोपाटोपपरैः परैश्चलचमूरङ्गत्तुरङ्गक्षत-
क्षोणिक्षोदवशादशोषि जलधिर्यैः स्तम्भतीर्थे पुरे ।
स्वेदाम्भस्तटिनीघटाघटनया श्रीवस्तुपालस्फुर-
त्तेजस्तिग्मगभस्तिना प्रतनुभिस्तैरेव सम्पूरितः ॥ १३७ ॥

यः प्रत्यर्थिक्षितिपतिकरिच्छेदभेदस्विशक्ति-
र्मुक्तागौरैरवनिवलयं कीर्त्तिपूरैरपूरि ।
तं वल्गन्तं युधि विधुरयामास सङ्ग्रामसिंहं
निस्त्रिंशो यत्करपरिचितः कृष्णसारोऽपि चित्रम् ॥ १३८ ॥

ख्यातः सङ्ग्रामसिंहो वा शङ्खो वा सिन्धुराजभूः ।
संयुध्य भज्यमानोऽस्य युद्धे सत्याभिधोऽभवत् ॥ १३९ ॥

भग्नः शङ्ख इति स्वरैर्दिविषदामाक्षिप्य लक्ष्मीमुखं
लक्ष्मीशः किल शङ्खलक्ष्मणि करे चिक्षेप चक्षुश्चलम् ।
कीर्त्त्या लुप्तमवीक्ष्य शङ्खममलं यस्य स्वयं विस्मयं
गच्छन्कश्मलसिन्धुराजतनुभूकीर्त्त्या कृतार्थीकृतः ॥ १४० ॥

असौ कीर्त्तीः स्वका मन्त्री कामं त्रीणि जगन्त्यनु ।
वस्तुपालोऽरिसामन्तयशसामन्तकोऽक्षिपत् ॥ १४१ ॥

पद्माभिरामहस्तेन महस्तेन प्रतन्वता ।
रविणेव तमःस्तोमः समस्तो महता हतः ॥ १४२ ॥

संयोजितेन मणिमण्डितशातकुम्भ-
कुम्भत्विषा शुचिनखेन करद्वयेन ।
मौलिस्थितेन जिननाथसनाथमध्य-
प्रासादवद्दिनमुखे क्षणमीक्ष्यते यः ॥ १४३ ॥

मालिन्यं मुमुचे जगत्त्रयशुचेरर्केन्दुमन्दाकिनी-
सम्पर्कादपि यत्र दुर्दमतमःसम्बन्धबन्धूकृतम् ।
आकाशेन तदप्ययमुच्यत चिरं यत्तीर्थयात्रारजः-
स्नात्रा दृश्यतदात्वनिर्मलमिलत्कीर्त्तिद्युतिद्योतिना ॥ १४४ ॥

मा भून्मद्भवनेऽपि दुस्तरतमःस्तोमस्तथा मा स्म भू-
न्नेत्रेऽपि द्युसदां सदा विकसिते सम्मीलनं मर्त्यवत् ।
इत्युद्दामिरजःसमुच्चयभयाद्दम्भोलिपाणिर्महो-
मम्भोभृद्भिरसीषिचत्प्रतिदिनं यत्तीर्थयात्रोद्यमे ॥ १४५ ॥

यद्दिक्कुम्भिकुलाद्रिकोलकमठव्यालेश्वराः खेचराः
कष्टादेव दधुस्तलं तदवनेर्विष्णुश्चतुर्भिर्भुजैः ।
खड्गाङ्केन भुजेन वीरधवलो मुद्राङ्गुलीलीलया
तेजःपालकरस्तदेव सबलः ख्यातो बलिभ्योऽप्यसौ ॥ १४६ ॥
सङ्घोऽधिरोहन्निह रैवताद्रौ वस्त्रापथस्थानतपोधनानाम् ।
ददौ यदौचित्यधियाऽपि किञ्चित् कालेन नीतं करतां तदेतैः ॥ १४७ ॥
यात्रापर्वणि रैवतक्षितिधरे प्राज्ञोऽत्र मन्त्रीश्वर-
स्तेजःपाल इदं निशम्य जनतोऽथाहूय तांस्तापसान् ।
सार्द्धं द्रम्मसहस्रयुग्ममुचितं दत्त्वोत्तमर्णव्रजा-
त्तद्ग्रामं परिमोचयन्करममुं सन्त्याजयामासिवान् ॥ १४८ ॥
( युग्मम् )

किञ्चैतेन गुणैः शशाङ्कशुचिभिः कृष्टः सुराष्ट्रापतिः
पित्रोः पुण्यकृते जिनेश्वरकरं श्रीभीमसिंहोऽमुचत् ।
तीर्थारक्षकहेतवे तु कृतिना देवादितो दापिता
सेयं पञ्चशती सुराष्ट्रपतये तस्मै पुराभ्यर्थनम् ॥ १४९ ॥
बभूव गोत्रैकगुरुर्गरीयानेषामशेषागमपारदृश्वा ।
नागेन्द्रगच्छे स महेन्द्रसूरिर्महेन्द्रनागेन्द्रयशा मुनीन्द्रः ॥ १५० ॥
कर्मसाक्षिभवतापपीडितं क्रीडितं शमरसौघपल्वले ।
क्षालिताखिलमदं स्म दन्तिवद्यं त्यजन्ति खलु कश्मलालयः॥१५१॥
पन्था ग्रन्थाटवीनां मुनिरजनि ततः कोऽपि कल्याणवल्ल्याः
कन्दः कन्दर्पदर्पद्रुमवनदहनभ्रान्तिसूः शान्तिसूरिः ।
प्रत्यग्रक्षुब्धदुग्धार्णवनवलहरीकल्पजल्पेन यस्मिन्
जल्पाके कोविदेशे मतिमकृत कृती को विदेशे न गन्तुम् ॥१५२॥
आनन्दचन्द्रामरचन्द्रसूरी तत्पट्टलक्ष्मीशुचिभूषणाभौ ।
अन्तःस्फुरद्रत्नसपत्नभूतगुरुक्रमाम्भोजनखावभूताम् ॥ १५३ ॥
दन्तौ धर्ममतङ्गजस्य दुरितक्षोणीरुहच्छेदने
गच्छव्योमतलस्य सोमतरणी मोहान्धकारव्यये ।
सम्यक्त्वक्षितिपस्य दुर्दमरिपुभ्रंशे भुजौ शासना-
रण्यस्थौ प्रतिवादिकुम्भिदलने यौ व्याघ्रसिंहौ श्रुतौ ॥ १५४ ॥
श्रीमांस्ततोऽजनि मुनिः स तदीयपट्ट-
श्रीपट्टबन्धमुकुटो हरिभद्रसूरिः ।

एकत्र सोमशतपत्रगुणौ मुखाग्रे
शश्वद्विबोधमधुरौ समवासयद्यः ॥ १५५ ॥

नृणां यत्पदपद्मयोर्भुवि भवत्यौन्नत्यहेतुर्नति-
र्भालन्यस्तरजोव्रजो वितनुते सर्वप्रकर्षोदयम् ।
आधत्ते च नखेन्दुदीधितिभरः पद्माकरोल्लासनं
स्तौमि श्रीहरिभद्रसूरिसुगुरोस्तस्याद्भुतं वैभवम् ॥ १५६ ॥

जयति विजयसेनसूरिरूरीकृतसुकृतस्तदयं तदीयपट्टे ।
जितजगदपि मन्मथो न यस्य व्यधित तनुप्रतिपन्थिनोऽपि तापम् ॥१५७॥

इन्दुः पत्रावलम्बं व्यधित कुवलये दुर्मदात्मा प्रपेदे
गर्जत्पर्जन्यदन्ती व्यतनुत जगति स्तम्भभावं फणीन्द्रः ।
चिक्षेप क्षीरसिन्धुर्दिशि विदिशि तृणैः संयुतं वारिजातं
यस्योद्दामप्रमाणैर्यशसि विसृमरे ते तु सन्तोऽप्यसन्तः ॥ १५८ ॥

यस्मादभ्युदयं भजेन्ननु जनो धर्मस्य तस्याप्यसौ
दूराद्दूरतरं चरत्यनुदिनं संवर्द्धमानः श्रिया ।
दुर्दैवव्ययमानवैभवभरस्ताद्दक्षलक्ष्मीकृते
तस्यैवाभिमुखं हि धावति सुधाभानुर्यथा भास्वतः ॥ १५९ ॥

दोषोन्मुद्रणमुद्रितेऽपि दिवसारम्भस्मितेऽपि स्थिते
भाग्याम्भोरुहि निर्विशेषितमनःसन्तोषपोषस्थितिः ।
अन्तःसन्ततधर्मनिर्मलमधुस्वादैकतानाशयः
साधुर्माधुकरीं बिभर्त्ति विरलो वृत्तिं जनः कश्चन ॥ १६० ॥

आयुर्वायुहतोर्मिवत्तरुणिमा घूर्णिभ्रमत्कम्बुव-
त्कम्बुप्रस्रवदम्बुबुद्बुदकवल्लक्ष्मीलवोऽप्यन्वहम् ।
सद्योबुद्बुदबिन्दुभेदकणवत्तोषोऽपि दोषादिक-
क्रूरग्राहनिधौ कुकर्मजलधौ साक्षादिव प्रेक्ष्यते ॥ १६१ ॥

ईदृग्रूपगुरूपदेशविशदस्वाभाविकस्वच्छधी-
स्तेजःपालनिजानुजानुचरितः श्रीवस्तुपालः कृती ।
शुभ्रादभ्रयशःप्रसूनसुभगश्रीवल्लिकन्दोपमां
धर्मस्थानपरम्परां रचयितुं धत्तेतमामुद्यमम् ॥ १६२ ॥

मज्जन्तीमवनीमवेक्ष्य दुरिताम्भोधौ नवं भूधर-
प्राग्भारं रचयाञ्चकार यमसौ तीर्थेशचैत्यच्छलात् ।

तत्रैनःप्रतिदन्तिनाशसुभगः प्रेक्षामृदङ्गस्वनै-
गर्जद्विश्वजयी जयत्यनुदिनं धर्मद्विपो भूतले ॥ १६३ ॥
स्तम्भनपुररैवतगिरिदैवतचैत्ये प्रपञ्चिते येन ।
शत्रुञ्जयजिनपुरतस्तीर्थत्रयगतिफलं कुरुतः ॥ १६४ ॥
शत्रुञ्जये भवपयोधितरार्थतीर्थं
येनेन्द्रमण्डपमखण्डपदं व्यधायि ।
तस्मादुरःकरधृताद्भुतकुम्भशक्त्या
तीर्त्वा तमोजलमयन्ति जना जिनाग्रे ॥ १६५ ॥
अस्मिन्नाभिभुवः प्रभोस्तनुभवश्चक्री स चक्रे पुरा
चैत्यं श्रीभरतः परे तु सगरक्ष्मापालमुख्या व्यधुः ।
देवो दाशरथिः पृथासुतपतिः प्राग्वाटभूर्जावडिः
शैलादित्यनृपः स वाग्भटमहामन्त्री च तस्योद्धृतिम् ॥ १६६ ॥
व्यातन्वन्नमरेन्द्रमण्डपमयं श्रीरैवतस्तम्भना-
लङ्कारप्रभुनेमिपार्श्वसहितं तीर्थेऽत्र शत्रुञ्जये ।
प्राग्वाटान्वयवार्द्धिवर्द्धनविधुर्धात्रीशमन्त्रीशिता
श्लाघ्यः सङ्घपतिः सतां विजयते श्रीवस्तुपालोऽधुना ॥ १६७ ॥
( युग्मम् )
किं चित्रं यदि वत्सवत्सलतया स्वच्छाश्ममूर्त्तिच्छला-
दत्राखण्डलमण्डपे सुरपुरादभ्याययुः पूर्वजाः ।
एतस्य प्रतिपन्नसूनुपदवीभाजोऽपि येनाद्भुत-
प्रीत्यावासमिह व्यधाद्विधिपुरं त्यक्त्वाऽपि वाग्देवता ॥ १६८ ॥
पृष्ठे काञ्चनपट्टिकं जिनपते राज्यस्य भामण्डल-
श्रीतुल्यं पुरतोऽपि सत्यपुरभूवीरावतारं मुदा ।
कुम्भान्पञ्च च पञ्चपातकतमश्चण्डद्युतीन्मण्डपे
श्रीशत्रुञ्जयदन्तिदाननदवच्चक्रे तडागं च यः ॥ १६९ ॥
चक्रे च यो धवलके विमलाद्रिचैत्यं
पञ्चासरं च पुरि गूर्जरकर्णिकायाम् ।
तत्केतुकैतवकरद्वयनर्त्तनेन
शुभ्रप्रभां नभसि नर्तयति स्म कीर्त्तिम् ॥ १७० ॥
प्रतिष्ठाप्य च मन्त्रीशस्तीर्थेशं मुनिसुव्रतम् ।

योऽश्वावतारतीर्थस्य मन्दिरं विदधे कृती ॥ १७१ ॥
ग्रामे शासनदत्ते च विदधे योऽर्कपालिते ।
तडागं सागराकारममात्यः प्रपया सह ॥ १७२ ॥
व्याजात्पौषधशालानां नासत्यरुचिचेष्टितः ।
यः पापौषधशालानां श्रेणिं श्रीमानकारयत् ॥ १७३ ॥
येन स्तम्भनकाधिदैवतजिनप्रासादमुत्कृत्य तं
तत्तेने किमपि प्रपाद्वयमपि श्वेतांशुशुभ्रप्रभम् ।
यत्पश्यन्ति पुरो जिनेश्वरपदानुध्यानयात्राधना
धीमन्तो निजमूर्त्तिकीर्त्तिसुकृतश्वश्रद्धयाडम्बरम् ॥ १७४ ॥
श्रीमालवेन्द्रसुभटेन सुवर्णकुम्भा-
नुत्तारितान्पुनरपि क्षितिपालमन्त्री ।
श्रीवैद्यनाथसुरसद्मनि दर्भवत्या-
मेकोनविंशतिमपि प्रसभं व्यधत्त ॥ १७५ ॥
तत्रैव वीरधवलक्षितिवल्लभस्य
मूर्त्तिस्तदीयसुदृशोऽपि च जैत्रदेव्याः ।
स्वीयानुजस्य च निजस्य च मल्लदेव-
मन्त्रीश्वरस्य च चकार स भूपमन्त्री ॥ १७६ ॥
नृत्यन्त्या व्योमरङ्गे क्रमकटकझणत्कारतारं द्युगङ्गा-
रङ्गच्चक्राङ्गनादं सचिवकुलपतेर्वस्तुपालस्य कीर्त्तेः ।
खेदप्रस्वेदबिन्दुश्रियमियमयते पद्धतिस्तारकाणां
यावत्तावत्पताकाञ्चलचलनविधिं चैत्यमाला विधत्ताम् ॥ १७७ ॥
इमामकृत सद्गुरोर्विजयसेनसूरिप्रभोः
क्रमाम्बुजरजोमृजा विमलमानसोल्लासभृत् ।
प्रशस्तिमुदयप्रभः प्रभवदद्भुतप्रातिभ-
प्रभावभरभासुरः सुकृतकीर्त्तिकल्लोलिनीम् ॥ १७८ ॥
प्रसादादादिनाथस्य यक्षस्य च कपर्दिनः ।
वस्तुपालान्वयस्यास्तु प्रशस्तिः स्वस्तिशालिनी ॥ १७९ ॥

समाप्ता सुकृतकीर्त्तिकल्लोलिनीसञ्ज्ञकेयं प्रशस्तिः ।
कृतिरियं पण्डितपुण्डरीकश्रीमदुदयप्रभस्य ।

---

## NOTES.

**P. 1. l. 12. भीमेश्वर**—The god of the Bhîmeśa temple in Cambay on the occasion of whose festive procession the present drama was first acted.

Vastupâla erected a golden flag-staff and knob for this temple.

*cf.* कलशध्वजदण्डं च यः कार्तस्वरभास्वरम्। भीमेशवेश्मनः शृङ्गे स्वप्रतापमिव व्यधात् ॥

जिनहर्ष—वस्तुपालचरित्र. IV-720.

श्रीस्तम्भतीर्थनगरे रचयाञ्चकार भीमेशवेश्मनि च काञ्चनकेतुकुम्भौ ।
मूर्त्तेव कीर्तिरनिशं वरवैजयन्ती नर्नर्त्ति यत्र दिवि देवनदीं जयन्ती ॥

सुकृतसङ्कीर्तन I-3.

**P. 1. l.** 15 जयन्तसिंह or जैत्रसिंह—for whose delectation the present drama was first staged at Cambay, was the only son of Vastupâla by his first wife Lalitâdevî. He was governor of Cambay from Samvat 1279 forward.

*cf.* महामात्यश्रीवस्तुपालस्यात्मजे महं० श्रीललितादेवीकुक्षिसरोवरराजहंसायमाने महं० श्रीजयन्तसिंह सं० ७९ पूर्वं श्रीस्तम्भतीर्थमुद्राव्यापारान् व्यापृण्वति सति Mt. Girnar inscription.

In Someśvara's Mt. Âbu praśasti, we find the following about him.

दयिता ललितादेवी तनयमवीतनयमाप सचिवेन्द्रात् । नाम्ना जयन्तसिंहं जयन्तमिन्द्रात्पुलोमपुत्रीव ॥४४॥

यः शैशवे विनयवैरिणि बोधवन्ध्ये धत्ते नयं च विनयं च गुणोदयं च ।
सोऽयं मनोभवपराभवजागरूकरूपो न कं मनसि चुम्बति जैत्रसिंहः ॥

श्रीवस्तुपालपुत्रः कल्पायुरयं जयन्तसिंहोऽस्तु । कामादधिकं रूपं निरूप्यते यस्य दानं च ॥

As to his liberalities *cf.*

गिरावत्र ववर्ष श्रीजैत्रसिंहोऽपि सर्वतः । यथा हेमाम्बुदख्यातिं लेभे कविसमर्पिताम् ॥

जिनहर्ष—वस्तुपालचरित्र VI-618.

He had two sons Pratâpasiṇha and his younger brother whose name is not known.

For the religious merit of Pratâpasiṇha and his younger brother Vastupâla erected two Devâkulikâs in the Kumâravihâra at Cambay.

*cf.* पौत्रप्रतापसिंहस्य तद्भ्रातुश्च कनीयसः । तत्रार्हद्देवकुलिके श्रेयसे द्वे चकार सः ।

After the death of Vastupâla, Visaladeva attracted with his valour, made Jaitrasiṇha the governor of Petlad.

*cf.* पेटलाद्रपुरैश्वर्यं जैत्रसिंहाय मन्त्रिणे । पराक्रमगुणक्रीतः प्रसन्नोऽदात्ततो नृपः ॥

It was at his instance that Bâlachandrasûri composed his Vasantavilâsa. He outlived his uncle Tejahpâla who lived 10 years after Vastupâla. For the memory of his uncle, Jaitrasiṇha erected a temple with a resthouse, an alms-house and a tank at Chandronmânapara (Chanasma ?)

*cf.* तत्र श्रीजैत्रखिद्देन गजाश्वरचनाञ्चितम् । सतोरणजिनाधीशमन्दिरं मन्दरोपमम् ॥ ९२ ॥
सरोवरं तथा धर्मशालासत्रालयद्वयम् । विदधे श्रेयसे तस्य मन्त्रिणो नृपशासनात् ॥ ९३ ॥
जिनहर्ष—वस्तुपालचरित्र. VIII–592-93

**P. 2. l. 20** जयसिंहसूरि The author of the drama should not be confused with Jayasiṇha Sûri of Kṛishṇagaccha and author of Kumârapâlakâvya and Nyâyatâtparyadîpikâ commentary on Nyâyasâra and the spiritual grand father of Nayachandra Sûri the author of Hammîramahâkâvya and who composed his Kumârapâlacharitra in samvat 1422. Our author was pupil of Vîrasûri and was the high-priest of the famous Tîrtha of Munisuvratasvâmi at Broach. Tejaḥpâla once went on a pilgrimage to Broach to pay his respects to Munisuvratasvâmi. Jayasinha Sûri at this time recited a poem wherein he requested him to replace bamboo staffs of 25 Devakulikâs by golden ones. The request was granted. See author's वस्तुपालतेजःपालप्रशस्ति 63–69

also भृगुकच्छमहातीर्थे यात्रार्थमन्यदाऽगमत् । तेजःपालो महामात्यः सङ्घेन महतान्वितः ॥ ९७ ॥
श्रीसुव्रतजिनाधीशं मज्जनोत्सवपूर्वकम् । अभ्यर्च्य विधिना साधून् ववन्दे तत्र संस्थितान् ॥ ९८ ॥
तस्मिन्नवसरे स्माहुस्तं वायडगणाधिपाः । एकं सन्देशकं मन्त्रिन् श्रुत्वात्मानं कृतार्थय ॥ ९९ ॥
आदिश्यतां मुनिस्वामिन्नेवं वादिनि मन्त्रिणि । ते जगुर्युवती काचिन्निश्यस्मानित्यभाषत ॥ १०० ॥
तेजःपाल कृपालुधुर्य ! विमलप्राग्वाटवंशध्वज ! श्रीमन्नम्बडकीर्त्तिरद्य वदति त्वत्सम्मुखं मन्मुखात् ।
आजन्मावधि वंशयष्टिकलिता भ्रान्ताहमेकाकिनी वृद्धा सम्प्रति पुण्यपुञ्ज ! भवतः सौवर्णदण्डस्पृहा ॥ १०१ ॥
श्रुत्वेति मुदितस्वान्तः सद्धाज्ञेयमयानसौ । अमात्याम्बडदेवस्य विहारे पापहारिणि ॥ १०२ ॥
न्यधाद्दासस्ततो देवकुलिकासु तदैव च । उद्दण्डध्वजदण्डाढ्यान् कलशान् विमलद्युतीन् ॥ १०३ ॥
जिनहर्ष—वस्तुपालचरित्र VII.

The present drama too seems to owe its origin to the same gift.

**P. 4. l. 19** सखे तेजःपाल The relations between Vîradhavala and Tejahpâla were those of friends.

*cf.* चौलुक्यक्षितिपालवीरधवलस्याद्वैतबन्धुः सुधीस्तेजःपाल...
also Mt. Âbu Praśasti 64.
पुरा श्रीमत्पत्तनवास्तव्येन तत्कालं तत्रायाततेजःपालमन्त्रिणा सह सौहार्दमुत्पेदे ।

**P. 5. l. 23** सिंहभ्रातृव्यस्य

*cf.* भ्राता सिंहभटस्य यः किल भटश्रेणीशिरोमण्डलीमाणिक्यप्रतिबिम्बिताङ्घ्रियुगलः श्रीसिन्धुराजोऽभवत्।
शङ्खस्तत्तनयः पराक्रमवतामाद्याभिधेयः सतां वीरः सम्प्रति वस्तुपालसचिवेनासौ क्षणान्निर्जितः ॥
जिनहर्ष—वस्तुपालचरित्र V–234

**P. 7. l. 21** पञ्चग्रामसङ्ग्रामसङ्कटे

*cf.* वस्तुपालप्रबन्ध from चतुर्विंशतिप्रबन्ध printed as appendix to Vasantavilâsa pp. 85–87.

also

अथ भद्रेश्वरे वेलाकूले लोलेतरश्रिणि । श्रीपतिश्रेणिसङ्कीर्णे स्वर्गस्थितिविजित्वरे ॥ ६६ ॥
पराक्रमगुणेनोर्व्यामपरः किल भार्गवः । भीमसिंहः प्रतीहारकुलकाननमण्डनम् ॥ ६७ ॥
नृपोऽस्ति त्रासितानेकशत्रुसन्ततिरुत्कटः । श्रीकोशसैन्यसम्पत्त्या तृणवद्गणयन्परान् ॥ ६८ ॥
वीरमानी महादानी लङ्कायामिव रावणः । समुद्रपरिखाविष्टदुर्गदुर्गमसंस्थितिः ॥ ६९ ॥
चतुर्भिः कलापकम् ॥

अन्यदेत्यादिशद्वीरधवलस्तं क्षितीश्वरम् । भूयास्त्वं सेवकोऽस्माकं सङ्ग्रामे वाऽतिथिर्भव ॥ ७० ॥
सोऽपि प्रत्यादिशत्तस्मै तथैव व्यथितोऽधिकम् । यतः प्रदीयते यादृक् तादृगेवात्र लभ्यते ॥ ७१ ॥
ततो गौर्जरभूमीशो दिगीशोपमविक्रमान् । क्रमेणामेलयन्भूपान्भीमसिंहजिगीषया ॥ ७२ ॥
भद्रेश्वरमहीजानिः सज्जीकृत्य निजं बलम् । देशसीमानमाक्रम्य तस्थौ वज्रार्गलोपमः ॥ ७३ ॥
इतो मरुस्थलीभालस्थलीतिलकसन्निभे । जाबालिनगरे स्वर्णगिरिशृङ्गारकारिणि ॥ ७४ ॥
राज्ञः समरसिंहस्य पुत्रः क्षत्रव्रताग्रणीः । श्रीमानुदयसिंहोऽस्ति प्रथितः पृथिवीपतिः ॥ ७५ ॥
चाहुमानकुलाकाशे यस्मिंस्तपति भास्वति । लोके दोषान्धकारस्य नावकाशोऽभवत्क्वचित् ॥ ७६ ॥
सहोदरास्त्रयस्तस्य प्रशयस्थितिशालिनः । प्राप्तरेखाः प्रवीरेषु विख्याताः क्षमाभृतां धुरि ॥ ७७ ॥
सामन्तपालभूपालः प्रथमः पार्थविक्रमः । द्वितीयोऽनन्तपालश्च कलावानिव सत्कलः ॥ ७८ ॥
त्रिलोकसिंहनामान्यो मान्यश्चासीन्मनस्विनाम् । स्वौजसा गणयन्त्येते त्रयोऽपि तृणवज्जगत् ॥ ७९ ॥
त्रिभिर्विशेषकम् ॥

ग्रासमात्रे त्रपापात्रे ज्येष्ठभ्रात्रार्पितेऽप्यमी । महेच्छत्वादकुर्वाणा अपि स्वहृदये धृतिम् ॥ ८० ॥
कल्पस्थायि न जीवितमैश्वर्यं नाप्यते यदाभिमतम् । लोकस्तथाप्यकार्यं कुरुते कार्यं समुद्दिश्य ॥ ८१ ॥
इति सूक्तं स्मरन्तोऽन्तर्न्यायधर्मवतां नराः । स्वबन्धुवधजं पापं न चिकीर्षन्ति कर्हिचित् ॥ ८२ ॥
समाने सोदरत्वे तु प्रज्ञातेजोबलोज्वले । राजसेवकभावोऽयं दुःसहो हि मनस्विनाम् ॥ ८३ ॥
अवृत्तिभयमन्त्यानां मध्यानां मरणाद्भयम् । उत्तमानां च मर्त्यानामपमानात्परं भयम् ॥ ८४ ॥
वरं विदेशगमनं वरं काननसेवनम् । मध्ये स्वजनवर्गस्य नापमानेन वर्त्तनम् ॥ ८५ ॥
इति चिन्ताभृतस्ते तु त्रयोऽप्यल्पपरिच्छदाः । बन्धुराज्यं परित्यज्य पङ्काम्भ इव चातकाः ॥ ८६ ॥
श्रीवीरधवलोपास्तिं स्वमनोऽभीष्टदायिनीम् । चिकीर्षवः समाजग्मुर्धवलक्कपुरं तदा ॥ ८७ ॥
युग्मम् ॥

तत्र श्रीवस्तुपालस्य वैभवं श्रुतपूर्विणः । ते पूर्वं प्रापुरावासं व्यवहारैकवेदिनः ॥ ८८ ॥
दृष्ट्वा राजकुमारांस्तान्कुमारस्फारतेजसः । निजगेहाङ्गणे प्राप्तान्सर्वाङ्गसुभगस्थितीन् ॥ ८९ ॥
आसनादिविधिं भृत्यैः कारयित्वा सगौरवम् । बभाषे धीसखाधीश एवं सस्नेहमानसः ॥ ९० ॥
युग्मम् ॥

पुण्यवन्तो भवन्तोऽत्र कुतः स्थानात्समागताः । किं प्रयोजनमुद्दिश्य भूभुजः क्षत्रियोत्तमाः ॥ ९१ ॥
विनयं राजपुत्रेभ्य इति सूक्तस्य सत्यताम् । नयन्तो नम्रमूर्धानोऽधिकं ते मन्त्रिणः पुरः ॥ ९२ ॥
स्वरूपं भ्रातृभूपस्य निरूप्य निखिलं निजम् । यथास्थिततया प्रोचुरेवं भूपालसूनवः ॥ ९३ ॥
कृतज्ञविज्ञमाणिक्यं सर्वाङ्गीणगुणोदयम् । श्रुत्वा भवन्तं चौलुक्यराज्यलक्ष्मीधुरन्धरम् ॥ ९४ ॥
त्वदङ्घ्रिकमलोपास्तिं वयं कर्तुमिहागताः । श्रीवीरधवलस्वामिसेवाकल्पलतां श्रिताः ॥ ९५ ॥
इत्याकर्ण्य वचः कर्ण्यं तेषां मन्त्रिपुरन्दरः । सुप्रसन्नमनाः प्रोचे यत्सन्तोऽन्यहितैषिणः ॥ ९६ ॥
फलेग्रहिरभूदद्य नृपव्यापारभूरुहः । यद्यूयं मे गृहं प्राप्ता राजानोऽतीव दुर्लभाः ॥ ९७ ॥

ततो नानाविधैर्भोज्यैर्भोजयित्वा सगौरवम् । सन्तोष्य च विशेषेण दिव्यवस्त्रविभूषणैः ॥ ९८ ॥
कर्पूरपूरसम्मिश्रताम्बूलार्पणपूर्वकम् । हेमरत्नमयीस्तेषां स ददौ यमदंष्ट्रिकाः ॥ ९९ ॥

युग्मम् ॥

आययौ सार्धमाकार्य ततस्तान्नृपनन्दनान् । सर्वार्यनन्दनो मन्त्री चौलुक्यनृपपर्षदि ॥ ४०० ॥
नरेन्द्रं ते नमस्कृत्य भक्तिपूर्वमवीवदन् । वस्तुपालमहामात्यं स्वरूपं स्वं यथास्थितम् ॥ १ ॥
आकर्ण्य च जगादैवं प्रमोदी मेदिनीपतिः । दन्तद्युतिसुधासारैः सिञ्चंस्तान्भूभुजोऽङ्गजान् ॥ २ ॥
अयं प्राचीनपुण्यानां प्ररोहः समभून्मम । युष्मदङ्घ्रिरजोराजिर्यत्पुनाति गृहाङ्गणम् ॥ ३ ॥
स एव दिवसः श्लाघ्यः सैव वेला प्रशस्यते । गृहस्थस्य गृहं यत्र कश्चित्कार्यार्थमाश्रयेत् ॥ ४ ॥
परं शौण्डीरशृङ्गारकारिणां पृथिवीभुजाम् । कीदृशी भवतां वृत्तिः कर्तव्येति निगद्यताम् ॥ ५ ॥
वृत्तिः शतसहस्राणां द्वितयं द्वितयं पृथक् । द्रम्माणां दीयतां देव ! वदन्ति स्म तदेति ते ॥ ६ ॥
तदुक्तं नृपतिः श्रुत्वा कृपणश्रेणिशेखरः । तान्वीरप्रवरान्प्रोचे प्रम्लानवदनाम्बुजः ॥ ७ ॥
इयद्भिर्धनलक्षैर्मे भवन्ति शतशो भटाः । सङ्गृहीतास्ततो यूयमधिकं किं करिष्यथ ॥ ८ ॥
यूयमेव नृपा ब्रूत ममेयद्द्रविणव्ययः । कमर्थं खलु पुष्णाति भृत्यमात्रकृतेऽधुना ॥ ९ ॥
तदन्यत्र नृपस्थाने यूयं यात यथारुचि । इत्युक्त्वा भूपतिर्दत्वा ताम्बूलं विससर्ज तान् ॥ १० ॥
अत्रान्तरे महीपालं वस्तुपालोऽब्रवीदिति । महान्तो नैव मुच्यन्ते स्वामिन्नेते मनस्विनः ॥ ११ ॥
धनं न बहु मन्तव्यं राजन् पुरुषसङ्ग्रहात् । पदे पदे भवेद्यच्छ्री राज्ञां सद्भृत्यसङ्ग्रहात् ॥ १२ ॥
यतः—तुङ्गानामपि मेघाः शैलानामुपरि दधति छायाम् । उपकर्तुं हि समर्था भवन्ति महतां महीयांसः ॥१३॥
सचिवेनैवमुक्तोऽपि स्तोकम्पचगणाग्रणीः । नादरं नृपतिश्चक्रे मरुवीरेषु तेष्वहो ॥ १४ ॥
ततोऽमी चुलुकाधीशं मुक्त्वा मुक्ताफलोज्ज्वलाः । बीटकप्राप्तिसन्तुष्टाः कृतज्ञजनमौलयः ॥ १५ ॥
भीमसिंहं प्रतीहारं भद्रेश्वरपुरेश्वरम् । सपत्नं गौर्जरेन्द्रस्य शिश्रियुः श्रितवत्सलम् ॥ १६ ॥
कार्पण्यं चुलुकेशस्य श्रुत्वा प्रीतमनास्ततः । तेषामकारयद्वृत्तिं द्विगुणां भीमभूपतिः ॥ १७ ॥
कलावतां नृणां सम्पज्जायते हि पदे पदे । समुद्रान्निर्गतश्चन्द्रः शम्भुमौलिमशिश्रियत् ॥ १८ ॥
अथ प्रवर्द्धितोत्साहः स्वामिकार्यचिकीर्षुभिः । सामन्तपालभूपालप्रमुखैर्वीरकुञ्जरैः ॥ १९ ॥
रोषणः प्रेषयामास प्रतीहारनृपेश्वरः। प्रति चौलुक्यभूपालं भट्टं प्रकटवादिनम् ॥ २० ॥

( युग्मम् )

गत्वाऽसौ भट्टराजोऽपि दत्वाऽऽशीर्वचनं मुदा । श्रीमद्गौर्जरराजाय निविष्टो विष्टरेऽभवत् ॥ २१ ॥
नीते नागपुरं पुरन्दरपरित्राणाय तत्रासुरे सौहार्देन धनञ्जयस्य निधनं राधासुते प्रापिते ।
विश्वं निःस्ववदेतदीयविरहादालोक्य तद्दुस्थितिच्छेदायावततार वीरधवलव्याजेन विष्णुः स्वयम् ॥ २२ ॥
परं निवेद्यते भीमसिंहेनैवं महीभुजा । दीप्यमानसमीपेन चाहुमानभटैस्त्रिभिः ॥ २३ ॥
आवयोश्चिरकालीनो रणरङ्गमनोरथः । कण्डूलभुजयोर्योऽस्ति सोऽधुनाऽस्तु फलेग्रहिः ॥ २४ ॥
श्रुत्वा तद्गौर्जरस्वामी स्फुरद्रोमाञ्चकञ्चुकः । यथारुचि प्रदानेन तमानन्द्याऽब्रवीदिति ॥ २५ ॥
पञ्चग्रामाभिधे ग्रामे क्षेत्रं प्रधनसाधनम् । सृजन्तं मां हि जानीहि चमूनागत्य सत्वरम् ॥ २६ ॥
त्वमपि द्रुतमागच्छ क्षेत्रे तत्र स्वसैन्यवान् । मरुवीरैस्त्रिभिः साकं पाकशासनविक्रमैः ॥ २७ ॥
एवं ज्ञापयते वीरधवलः प्रबलप्रभः । गत्वा निवेदय स्वस्मै स्वामिने भट्टकुञ्जर ! ॥ २८ ॥

( त्रिभिर्विशेषकम् )

इत्युक्तो भूभृता तेन गत्वा वृत्तान्तमादितः । वैतालिकः समाचख्यौ भद्रेश्वरनरेशितुः ॥ २९ ॥
अथ प्रयाणसामग्रीं समग्रां रणकर्मणे । निर्माय तत्क्षणादेव नृदेवश्चुलुकात्मजः ॥ ३० ॥
महामुहूर्त्तवेलायां वहन्नाडिपदं पुरः । निधाय गजमारूढः प्रौढैः परिवृढैः समम् ॥ ३१ ॥
गजानीकहयानीकरथानीकपदातिभिः । राज्यकार्यकृतोत्साहैः सर्वतः परिवारितः ॥ ३२ ॥
श्रीअश्वराजपुत्राभ्यामुभाभ्यां पार्श्वयोर्द्वयोः । स्थिताभ्यां विक्रमन्यायमूर्तिभ्यामिव शोभितः ॥ ३३ ॥
श्वेतातपत्रसंशोभी चामराभ्यां विराजितः । शकुनेषु समग्रेषु जयवादानुवादिषु ॥ ३४ ॥
पञ्चग्रामाभिधे ग्रामे सङ्ग्रामोत्सवकौतुकी । श्रीवीरधवलः प्रापत् क्रमाद्ग्रामाधिपैर्वृतः ॥ ३५ ॥
( षड्भिः कुलकम् )

भीमसिंहोऽपि तत्रागाचाहुमानभटोत्कटः । नागेन्द्रं विगलन्निद्रं सृजन्नातोद्यनिःस्वनैः ॥ ३६ ॥
ताभ्यां प्रतिष्ठितस्तत्र संग्रामस्त्रिदिनान्तरे । भूपानां दीर्घदर्शित्वं यदायतिहितावहम् ॥ ३७ ॥
दीयन्ते तत्र दानानि दुरितव्रातशान्तये । दीनानाथद्विजादिभ्यः सानन्दैः सुभटोत्तमैः ॥ ३८ ॥
सिंहनादा विधीयन्ते वृषस्कन्धैर्नृपाङ्गजैः । शस्त्राधिष्ठातृदेवीनां नानापूजोत्सवैः सह ॥ ३९ ॥
नित्यं नृत्यन्ति पात्राणि रसपात्राणि सर्वतः । प्रबन्धा वीरसम्बन्धा निवेद्यन्ते च पण्डितैः ॥ ४० ॥
निःस्वानप्रमुखातोद्यवृन्दध्वानप्रतिध्वनिः । पृथिवीं पूरयामास भट्टाशीर्वादपूर्वकम् ॥ ४१ ॥
उत्कण्ठा समभूद्योद्धुं योधानां वागगोचरा । नेदीयानिद्धबाहूनामाहवो हि महामहः ॥ ४२ ॥
दुर्विगाह्यां चरैर्ज्ञात्वा प्रत्यर्थिपृतनापगाम् । सङ्ग्रामदिवसादर्वाङ्मन्त्री भूपं व्यजिज्ञपत् ॥ ४३ ॥
देव ! कार्पण्यदोषेण युष्माभिर्नादृताः पुरा । तेजस्विनो महावीर्या मारवा ये भटास्त्रयः ॥ ४४ ॥
मिलिताः कलितोत्साहास्ते परस्मिन्बले ततः । तद्बलान्निर्भयो भीमसिंहो गर्जति निर्भरम् ॥ ४५ ॥
श्रुत्वेति मन्त्रिराजोक्तं स्माह श्रीराणकेश्वरः । अलं कातरलीलाभिर्यद्भाव्यं तद्भविष्यति ॥ ४६ ॥
जये वा युधि मृत्यौ वा लाभ एव महीभुजाम् । जये जयश्रियः प्राप्तिर्मृतौ च त्रिदशश्रियः ॥ ४७ ॥
उदरंभरिताधारी यो जीवत्यवनीपतिः । पराभवपदं यायात्प्रजाया अपि स क्रमात् ॥ ४८ ॥
मृतौ चिन्ता भवेत्तस्य भूभुजो रणसीमनि । राज्यभारैकधौरेया यस्य न स्युः सुमन्त्रिणः ॥ ४९ ॥
अथोवाच महामात्यश्चातुर्यैकबृहस्पतिः । देवे कार्मुकपाणौ तु परेलक्षास्तु के परे ॥ ५० ॥
यतः—कोलः केलिमलङ्करोतु करिणः क्रीडन्तु कान्तासखाः कान्तारे वरकासराः सरभसं गर्जन्त्विह स्वेच्छया ।
अभ्यस्यन्तु भयोज्झिताश्च हरिणा भूयोऽपि झम्पागतिं कान्तारान्तरसञ्चरव्यसनवान्यावन्न कण्ठीरवः ॥५१॥
भवदीयबले देव ! डोडीयान्वयसम्भवः । जेहुलः क्षत्रियज्येष्ठो जयत्येकोऽपि तत्रयम् ॥ ५२ ॥
द्वितीयः सोमवर्माऽस्ति वीरश्चौलुक्यचन्द्रमाः । तृतीयस्त्रिजगज्जेता क्षेत्रवर्माऽस्ति गोहिलः ॥ ५३ ॥
देवस्तु वर्णनीयः किं साक्षात्कलियुगार्जुनः । एकोऽप्यनेकवद्भाति सङ्ग्रामे योऽरिमानसे ॥ ५४ ॥
जायमानासु वार्तासु तयोरेवं परस्परम् । प्रणम्य वसुधाधीशं द्वारपालोऽभ्यधादिति ॥ ५५ ॥
कोऽप्येकः पुरुषः स्वामिन्द्वारि तिष्ठति वारितः । ईहमानो महीनाथदर्शनं विश्वपावनम् ॥ ५६ ॥
निर्देशो देवपादानां कीदृशो मम सम्प्रति । समानय समीपं मे भ्रुवेत्यादिष्टवान्नृपः ॥ ५७ ॥
तदादेशात्समागम्य सोऽवदन्नतिपूर्वकम् । स्वामिन्सामन्तपालाद्यैश्चाहुमानभटैस्त्रिभिः ॥ ५८ ॥
षड्भिः शतसहस्रैर्यं सङ्गृहीता भटास्त्वया । तैरात्मानं रणक्षोण्यां सम्यग् रक्ष क्षितीश्वर ! ॥ ५९ ॥
भवितासि प्रगेऽस्माकं त्वमेव प्रथमोऽतिथिः । कुमार्यामीयुषां शीघ्रमारेण्यामिति वोऽकथि ॥ ६० ॥
( त्रिभिर्विशेषकम् )

तदुक्तं चुलुकस्वामी विधाय श्रवणातिथिम् । दत्वा यथोचितं दानं तमुवाच स्मितानन: ॥ ६१ ॥
प्राप्तमेव रणे प्रातर्यूयं जानीत मामपि । सर्वेषामपि तत्रैव द्रक्ष्यते भुजसौष्ठवम् ॥ ६२ ॥
तेषामपि त्वयाख्येय एवं सन्देशको मम । सोऽपि गत्वा समाचख्यौ तेभ्यस्तद्भूभुजोदितम् ॥ ६३ ॥
समग्राप्यथ सामग्री राजादेशाद्बलद्वये । रजन्यामेव राजन्यैर्निर्ममे रणकर्मणे ॥ ६४ ॥
अथोदिते जगत्कर्मसाक्षिणि द्वादशात्मनि । उभयो: सैन्ययोस्तुल्यं दध्वान रणदुन्दुभि: ॥ ६५ ॥
तद्ध्वानश्रवणोद्भूतभुजकण्डूकरालिता: । योद्धुं संवर्मयामासुस्तत्कालं वीरपुङ्गवा: ॥ ६६ ॥
प्रात:कृत्यं समाधाय श्रीवीरधवल: प्रभु: । सर्वार्त्तिशान्तये दानं ददानो मार्गणव्रजे ॥ ६७ ॥
क्षत्रादित्य इवाप्रेक्ष्यो लक्षसङ्ख्यैर्नृपैर्वृत: । गीयमानगुणग्राम आजगाम रणावनिम् ॥ ६८ ॥
(युग्मम्)

जेहुलप्रमुखा वीरा हयारूढा महौजस: । नरेन्द्रं परितस्तस्थुर्विविधायुधपाणय: ॥ ६९ ॥
कृत्वा प्राभातिकीं पूजां सौवर्णकवचाङ्कितौ । वहन्तावायुधश्रेणिमश्वराजात्मजौ जवात् ॥ ७० ॥
मन्त्रिराजौ रणक्षोणिं प्राप्य जात्याश्वसंस्थितौ । राज्ञश्चौलुक्यचन्द्रस्य पार्श्वयोस्तस्थतु: स्थिरम् ॥ ७१ ॥
(युग्मम्)

भीमोऽपि भीमवद्भीम: सीमा नि:शेषदोष्मताम् । श्रेय:स्थानं दददानं याचकेषु पदे पदे ॥ ७२ ॥
युतो राजन्यचक्रेण चक्रपाणिरिवोल्बण: । रणक्षोणिमलञ्चक्रे वक्रेक्षणबिभीषण: ॥ ७३ ॥
(युग्मम्)

तदा सामन्तपालाद्या: सोदरा: शक्रसोदरा: । स्वकीयद्रम्मलक्षाणि गृहीत्वा भीमभूपते: ॥ ७४ ॥
निधायाव्ययकोशेषु पात्रेषु विविधेष्वपि । नानायुधधृत: कुन्तपाणय: कवचोज्ज्वला: ॥ ७५ ॥
प्रक्षरैर्गरुडाकारधारिणो जात्यवाजिन: । आरुह्यासह्यधामान आजिसीमानमाययु: ॥ ७६ ॥
(त्रिभिर्विशेषकम्)

रणतूर्यैर्गजव्यूहबृंहणैर्हयहेषितै: । वीरकोटीरहुङ्कारै: शब्दाद्वैतं तदाऽजनि ॥ ७७ ॥
नामग्राहं गुणग्राहं वंशग्राहं च बन्दिन: । व्यधुर्जयजयारावं प्रतिवीरमतल्लिका: ॥ ७८ ॥
कोमलस्तुमुलारम्भो जयश्रीवरणोपम: । मिथ: स्वस्वामिसन्तोषी ततोऽभूद्बलयोस्तयो: ॥ ७९ ॥
प्रावर्तन्त महायोधा योद्धुं क्रोधान्धदृष्टय: । मर्मणि क्रूरकर्माण: प्रहरन्त: परस्परम् ॥ ८० ॥
गलद्रुधिरधाराभिर्वपूंषि विदधुर्भटा: । कुङ्कुमद्रवरक्तानि वरितुं स्व:श्रियं किल ॥ ८१ ॥
शरौघैर्मण्डपं वीरास्तेनुराकाशमण्डले । अन्योन्यं भानुसन्तापसंहारस्य विधित्सया ॥ ८२ ॥
तस्थुर्घोरान्धकाराभै रजोभिर्विस्तृतैस्तदा । दु:खभारादिवाच्छाद्य स्याननानि दिगङ्गना: ॥ ८३ ॥
अथाजनि जगत्साक्षी ललाटन्तपमण्डल: । निपेतु: शतशो योधा: शस्त्रघातार्दिता भुवि ॥ ८४ ॥
भूमण्डलमिवालोक्य विच्छायं स्वबलं तदा । सावधानोऽभवद्वीरधवल: प्रेरयन्भटान् ॥ ८५ ॥
तस्थु: स्वस्वामिरक्षायै दक्षा दक्षतयाधिकम् । मन्त्र्यादिसुभटाग्रण्य: कुर्वन्त: शरदुर्दिनम् ॥ ८६ ॥
अत्रान्तरे तिरस्कृत्य भटास्थट्टं बलोत्कटा: । मारवास्ते महावीरभैरवा भल्लपाणय: ॥ ८७ ॥
अवोचन्सन्निधिं प्राप्तं श्रीवीरधवलप्रभुम् । अमी वयं त्वसौ देव: सावधानो भवाधुना ॥ ८८ ॥
रक्षणीयस्त्वया स्वात्मा यत्नतो वीरशेखर ! । तद्धनै: स्वीकृता योधा अपि त्वां पालयन्तु भो: ॥ ८९ ॥
(त्रिभिर्विशेषकम्)

श्रीवीरधवलः स्माह किं मुधाऽत्र विकत्थनैः। क्रिययैव स्वदोःस्थाम महद्भिर्हि प्रकाश्यते ॥ ९० ॥
तेषां ततोऽभवद्घोरं युद्धं क्रोधान्धचक्षुषाम् । भुवि प्रहारवेगार्ता निपेतुर्जेहुलादयः ॥ ९१ ॥
यतः—पुष्पैरपि न योद्धव्यं किं पुनर्निशितैः शरैः । युद्धे विजयसन्देहः प्रधानपुरुषक्षयः ॥ ९२ ॥
नानाराजकुमारेषु मन्त्रीन्द्रद्वितये तथा । यत्नतो निकटस्थेषु रक्षत्स्वपि निजं नृपम् ॥ ९३ ॥
कुन्तत्रयं तदा भालस्थले चौलुक्यभूभुजः । प्रदत्तं प्रकटीभूय तैर्वदद्भिरिति द्रुतम् ॥ ९४ ॥
एवं हन्मो वयं देव ! त्वामेकं किन्तु बीटकम् । अस्माभिश्च तदास्वादि त्वया दत्तं स्वपाणिना ॥९५॥
अनृणीकर्तुमस्माभिः साम्प्रतं तन्नराधिप । जीवन्मुक्तोऽसि याहि त्वं बहूनामुदरम्भरिः ॥ ९६ ॥
यथा तथा न हन्तव्यो भूयसामुपकारकः । अस्तंगते रवौ यस्माद्विश्वं तमसि मज्जति ॥ ९७ ॥
..............................................................................

..............................................................................

इतः—सन्त्रास्य सुभटश्रेणिं स्वौजसैव तटस्थिताम् । ते वीरधवलं वेगाद्धूपीठेऽधादलोठयन् ॥ १०० ॥
अथोपरवटं वाजिरत्नमादाय ते गताः । सन्ध्यायां च भटाः सर्वे विरेमू रणकर्मणः ॥ १ ॥
उत्पाट्य नृपतिं लब्धलक्षा मन्त्रीश्वरादयः । जवादुत्तारकं प्रापुः सचिन्ताः स्वचमूवृताः ॥ २ ॥
जितकाशी निजावासं भीमसिंहोऽपि जग्मिवान् । समं सामन्तपालाद्यैः प्रमोदद्विगुणप्रभैः ॥ ३ ॥
रजन्यां विवदन्तेऽथ भीमसिंहभटा मिथः । श्रीवीरधवलोऽस्माभिरस्माभिर्भुवि पातितः ॥ ४ ॥
मारवास्ते भटाः प्रोचुर्युष्माभिर्यदि पातितः । वादापहमभिज्ञानं तदा किञ्चित्प्रदर्श्यताम् ॥ ५ ॥
एवं जयविधौ वादे भटानां कोटिमागते । आनीय दर्शयामासुरश्वं ते भीमभूभुजः ॥ ६ ॥
उच्चैःश्रवःसमाकारं स्वर्णपर्याणशालिनम् । वल्गुवल्गामनोज्ञास्यं रत्नमालाविभूषितम् ॥ ७ ॥
श्रीचौलुक्यनराधीशतेजोराशिमिवापरम् । तदुपरवटं वाजिरत्नं सल्लक्षणान्वितम् ॥ ८ ॥
वीक्ष्य भद्रेश्वरस्वामी कामीव युवतीमुखम् । तुष्टोऽतीव सुधावृष्टिं वचोव्याजाद्विनिर्ममे ॥ ९ ॥
( त्रिभिर्विशेषकम् )

विशुद्धोभयपक्षेषु न्यस्ता श्रीर्नृपसूनुषु । अनेकधा फलत्वत्र सुपात्रे दानवद्ध्रुवम् ॥ १० ॥
उदघोषि नृपैः सर्वैर्मरुवीरैर्जितं जितम् । प्रमाणं हय एवात्र श्रीवीरधवलासनम् ॥ ११ ॥
नयेन नेता विनयेन शिष्यः शीलेन नारी प्रशमेन लिङ्गी ।
प्रौढावदातेन भटः प्रचण्डो धर्मेण जन्तुश्च सदा विभाति ॥ १२ ॥
एवं भीमबले वार्तासुधास्वादं वितन्वताम् । त्रियामाप्यगमत्तेषां क्षणवत्पृथिवीभुजाम् ॥ १३ ॥
रात्रौ किञ्चित्प्रतीकारैः सज्जीभूतोऽतिसाहसी । गौर्जराधिपतिः प्रातश्चिखेल द्यूतलीलया ॥ १४ ॥
ज्ञात्वा लीलायितं तादृग् श्रीचौलुक्यमहीभृतः । प्रतीहारनरेन्द्राय विज्ञप्तिं मन्त्रिणो व्यधुः ॥ १५ ॥
समृद्धः सप्तराज्याङ्गैर्विशेषान्मन्त्रिसम्पदा । राजन्निबद्धमूलोऽयं देवादेशश्च भूपतिः ॥ १६ ॥
ततो राज्ञामुना साकं नाकपालोपमश्रिया । विरोधो नायतौ श्रेयस्करः कस्यापि दृश्यते ॥ १७ ॥
यतः—अनुचितकर्मारम्भः स्वजनविरोधो बलीयसा स्पर्धा । प्रमदाजनविश्वासो मृत्युद्वाराणि चत्वारि ॥ १८ ॥
आगन्तुकबलं प्राप्य भव्यान्यगृहयुक्तिवत् । नाहङ्कृतिः सतां कर्तुं युज्यते जनगर्हिता ॥ १९ ॥
तदनेन समं सन्धिः कर्तव्यो देव साम्प्रतम् । आलोक्य स्वयं सम्यग्युक्तायुक्तविचारणाम् ॥ २० ॥
सत्यं मन्त्रिवचो मत्वा सन्धिं भीमोऽप्यमन्यत । हितोपदेशपीयूषं प्राप्तं को हि जिहासति ॥ २१ ॥
परं भयङ्करस्तेनाकारि सङ्ग्रामडम्बरः । अन्यत्कुर्वन्तिभूप लाश्चिकीर्षन्त्यन्यदेव हि ॥ २२ ॥

योद्धुं प्रचक्रमे वीरैर्यावदन्योन्यमुत्कटैः । तावद्भट्टैः कृतो मेलः प्रमोदी मेदिनीभुजोः ॥ २३ ॥
तथोपरवटं वाजिराजं राजेन्द्रवाहनम् । पश्चात्समर्पयामासुस्ते वीरा गौर्जरेशितुः ॥ २४ ॥
भद्रेश्वरपुरेणैव शुद्धोञ्छेनैव साधुना । करणीया धृतिर्भीमसिंहेनापि क्षमाभृता ॥ २५ ॥
पाठनीया न हि क्वापि स्वात्मनो विरुदावली । व्यवस्थेति स्थिरीचक्रे वस्तुपालेन मन्त्रिणा ॥ २६ ॥

..........................................................................................

भीमसिंहात्पृथग् कृत्वा दानभेदाद्युपायतः । वीरान् सामन्तपालादीन् विधाय निजसेवकान् ॥ ८६ ॥
मन्त्री प्राप्तपरप्राणक्रमाद्वाणरिपूपमः । द्रष्टुं चौलुक्यदेवायापराध्यन्तमनेकधा ॥ ८७ ॥
भीमसिंहं समुच्छिद्य समूलं कूलवृक्षवत् । नरेन्द्रशासनं चक्रे सर्वत्रास्खलितप्रभम् ॥ ८८ ॥

( त्रिभिर्विशेषकम् )

श्रीवीरधवलाधीशो नरसिंहं पुराऽजयत् । वीरः श्रीवस्तुपालस्तु राजसिंहं सुदुःसहम् ॥ ८९ ॥
पञ्चकोटीः सुवर्णस्य वाजिनामयुतं तथा । मन्त्री भद्रेश्वराधीशसङ्ग्रामफलमाप्तवान् ॥ ९० ॥
ददौ सामन्तपालाय स्थित्यै सत्यपुरं पुरम् । स्वभूपशासनान्मन्त्री शूराचन्द्रं द्वयोः पुनः ॥ ९१ ॥
अन्नाम्बुहेमवस्त्राणां दातारः स्युः पदे पदे । वस्तुपालः परं राज्ञां पुरग्रामप्रदोऽभवत् ॥ ९२ ॥
भयभ्रान्तैस्ततो भूपैः प्राभृतानि वितेनिरे । वाजिराजिमणिग्रामप्रमुखैः सारवस्तुभिः ॥ ९३ ॥
महामात्यबलोपेतं श्रीवीरधवलं प्रति । समुद्गते प्रभाधीशे को हि नार्थं प्रयच्छति ॥ ९४ ॥

( युग्मम् )

प्रतापश्चुलुकेन्द्रस्य कराक्रान्तमहीभृतः । प्रासरत्परितो नित्यं विश्वविश्वोपकारिणः ॥ ९५ ॥

जिनहर्ष—वस्तुपालचरित्र II

*cf.* also अथान्यदा पञ्चग्रामसङ्ग्रामाधिरूढयोः श्रीवीरधवललवणप्रसादयोः श्रीवीरधवलपत्नी राज्ञी जयतलदेवी सन्धिविधानहेतवे जनकं प्रति श्रीशोभनदेवमुपागता । किं वैधव्याद्भीरुः सन्धिबन्धं कारयसीति तेनाभिहिता । वीरचूडामणेः पत्युः श्रीवीरधवलस्योन्नतिमारोपयन्ती सा पितृकुलविनाशशङ्कया भूयो भूयोऽहमेवं व्याहरामि, तुरगपृष्ठाधिरूढे तस्मिन्वीरधवले स कोऽस्ति सुभटो यस्तत्सन्मुखे स्थास्यतीति व्याहृत्य सामर्षैव प्रतस्थे । अथ तस्मिन्समरसंरम्भे प्रहारव्यथाव्याकुले श्रीवीरधवले भुवस्तलमलङ्कुर्वति,

यः पञ्चग्रामसङ्ग्रामभूमौ भीमपराक्रमः । घातैः पपात सञ्जातैरश्वतो न तु गर्वतः ॥

इति किञ्चिदन्तर्भग्ने समरसुभटवर्गे एक एवायं पत्तिः पतित इति सकलं निजबलमुत्साहयन् श्रीलवणप्रसादः समस्तानपि रिपूँल्लीलयैव समूलकाषं कषितवान् । इत्थमेकविंशतिक्षतैः सत्वगुणरोचिष्णू रणरसिकतया क्षेत्रे पितुरग्रे पतितः ।

प्रबन्धचिन्तामणि—265

